भारतीयाधिशासनसंरक्षकतायां प्रकाशितम्
*Published under the auspices of Government of India*




# शब्दकल्पद्रुमः ।

अर्थात्

एतद्देशप्रचलितसमस्तकोषाशेषशास्त्रसङ्कलिताकारादिवर्णक्रमविन्यस्तशब्द-तल्लिङ्ग-नानार्थ-पर्य्याय-प्रमाण-प्रयोग-धातु-तदनुबन्धाभिधेय-सहित-तत्तच्छब्दप्रसङ्गोत्थित-वेद-वेदाङ्ग-वेदान्त-न्याय-पुराणेतिहास-सङ्गीत-शिल्प-सूपकारशास्त्र-ज्योतिष-तन्त्राख्यान-काव्यालङ्कार-च्छन्दःप्रभृति-नाम-लक्षणोदाहरण-द्रव्यगुण-रोगनिदानौषध-स्मृत्युक्तव्यवस्थादिसंयुक्त-सर्व्वदर्शनमतानुसारि-संस्कृताभिधानग्रन्थः ।

## स्यार-राजा-राधाकान्तदेव-बाहादुरेण

विरचितः ।

पाणिनिमतानुसारि-प्रत्येकशब्दव्युत्पत्ति-मूलग्रन्थातिरिक्तबहुलशब्दार्थ-प्रमाण-प्रयोग-पर्य्याय-धातुपदोदाहरणादिभिः
नूतनसङ्कलितबहुलशब्द-तदर्थ-तत्प्रमाण-प्रयोगादिसहित-
सुप्रशस्तपरिशिष्टेन च सार्द्धम् ।

## श्रीवरदाप्रसादवसुना तदनुजेन श्रीहरिचरणवसुना च

अशेषशास्त्रविशारदकोविदवृन्दसाहाय्येन संपरिवर्द्धितः । नागराक्षरैः प्रकाशितश्च ।

## पञ्चमः काण्डः ।

व्यञ्जनवर्णः ।

**मोतीलाल बनारसीदास**
दिल्ली :: वाराणसी :: पटना




# शब्दकल्पद्रुमः।

## पञ्चमकाण्डम्।



श, तालव्यशकारः। स तु शवर्गीयप्रथमवर्णः। व्यञ्जनत्रिंशद्वर्णश्च। अस्योच्चारणस्थानं तालु। इति तन्त्रव्याकरणे॥ (तथा च शिक्षायाम्। १७।
"कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू॥")
अस्य स्वरूपं यथा,—
"शकारं परमेशानि! शृणु वर्णं शुचिस्मिते!।
रक्तवर्णप्रभाकारं स्वयं परमकुण्डली॥
चतुर्वर्गप्रदं देवि! शकारं ब्रह्मविग्रहम्।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये!॥
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा।
त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्॥"
इति कामधेनुतन्त्रम्॥ * ॥
(वङ्गीयवर्णमालायाम्), तल्लेखनप्रकारो यथा,
"कुञ्चिता वामतो दक्षगता च गोक्षतिस्त्वधः।
पुनरूर्द्ध्वगता तासु वह्निचन्द्रदिवाकराः।
मात्रा भवानी विज्ञेया ध्यानमस्य प्रचक्षते॥"
इति वर्णोद्धारतन्त्रम्॥ * ॥
तद्वाचकानि यथा,—
"शः सव्यश्च कामरूपी कामरूपो महामतिः।
सौख्यनामा कुमारोऽस्थि श्रीकण्ठो वृषकेतनः॥
वृषघ्नः शयनं शान्ता सुभगा विस्फुलिङ्गिनी।
मृत्युर्देवो महालक्ष्मीर्महेन्द्रः कुलकौलिनी॥
बाहुर्हंसो वियद्वक्त्रं हृदनङ्गाङ्कुशः खलः।
वामोरुः पुण्डरीकात्मा कान्तिः कल्याण-
वाचकः॥"
इति योगिनीतन्त्रे १भागे ७पटले वर्णाभिधानम्।
(काव्यादावस्य प्रथमप्रयोगे सुखं फलम्। यथा, वृत्तरत्नाकरटीकायाम्।
"शः सुखं सस्तु खेदम्॥"
धात्वनुबन्धविशेषः। यथा, कविकल्पद्रुमः।
"——————शी ह्लादिः श तुदादिकः॥"
एतेन तुदी व्यथ् वाधे तुदति इति स्यात्।)

शं, स्त्री, सुखम्। इति त्रिकाण्डशेषशब्दरत्नावल्यौ॥ (यथा, देवीभागवते। ३।१८।७।
"न च हर्म्ये वने शं मे दीर्घिकायां न पर्वते॥")

शं, [म्] अ, कल्याणम्। (यथा, राजेन्द्रकर्णपूरे। ५१।
"यः कीर्त्तौ भवतो वतो दृपगुणैर्यः शंतनुः शन्तनुः॥")
शुभम्। शास्त्रम्। इति शब्दरत्नावली॥

शः, पुं, शिवः। शस्त्रम्। इति शब्दरत्नावली॥

शंयुः, त्रि, (शं शुभमस्यास्तीति। शं+"कंशंभ्यां बभयुस्तितुतयसः।" ५।२।१३८। इति युस्।) शुभान्वितः। इति त्रिकाण्डशेषः॥ (यथा भट्टिः। ४।१८।
"शार्ङ्गाणां पश्यतः शंयून् सविग्णी सुहवानना॥")
पुं, वृहस्पतिपुत्त्रोऽग्निविशेषः। यथा, महाभारते। ३।२१८।२।
"आहुतिष्वेव यस्याग्नेर्हविषाज्यं विधीयते।
सोऽग्निर्वृहस्पतेः पुत्त्रः शंयुर्नाम महाव्रतः॥")

शंवः, पुं, सुषलाग्रस्थलौहमण्डलकः। वज्रम्। इति धरणिः॥

शंवः, त्रि, (शमस्यास्तीति। शं+"कंशंभ्यामिति।" ५।२।१३८। इति वः।) शुभान्वितः। इति त्रिकाण्डशेषः॥

शंवरं, क्ली, (शं वृणोतीति। वृ+अच्।) जलम्। इत्यमरः॥

शंस, उ हिंसास्तुत्योः। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्। क्त्वावेट्।) तालव्यादिः। उ, शंसित्वा शस्त्वा। यः शंसति सतामिति हलायुधः॥ अनेकार्थत्वात् कथनेऽप्ययम्। यथा रघौ। शशंस वाचा पुनरुक्तयेवेति। न मे ह्रिया शंसति किञ्चिदीप्सितमित्यादि च। इति दुर्गादासः॥

शंसा, स्त्री, (शंस+अः। स्त्रियां टाप्।) वाक्यम्। वाञ्छा। इति मेदिनी॥ प्रशंसा। इति शब्दरत्नावली॥

शंसितः, त्रि, (शंस+क्तः।) निश्चितः। इति हलायुधः॥ हिंसितः। स्तुतः। इति शन्सधातोः क्तप्रत्ययेन निष्पन्नमेतत्॥ (यथा, महाभारते। १।१३८।२५।
"ब्राह्मणाश्च महात्मानः सोमपाः शंसित-
व्रताः॥")

शंस्ता, [ऋ] पुं, (शंस+"तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ।" उणा० २।९४। इति तृन्। यद्वा, छन्दसि "ग्रसितस्कभितस्तभितेति।" ७।२।३४। इति निपातनात् साधुः।) स्तोता। होता। इति संक्षिप्तसारोणादिवृत्तिः॥ (प्रशास्ता। यथा, ऋग्वेदे। १।१६२।५।
"होताध्वर्युरावया अग्निमिन्धो
ग्रावग्राभ उत शंस्ता सुविप्रः॥"
"शंस्ता प्रशास्ता।" इति तद्भाष्ये सायणः॥)

शंस्थः, त्रि, (शं शुभे तिष्ठतीति। शम्+स्था+"स्थः क च।" ३।२।७७। इति कः।) शुभान्वितः। शंपूर्व्वस्थाधातोर्डप्रत्ययेन निष्पन्नमिदम्॥

शंस्थाः, त्रि, (शं+स्था+"स्थः क च।" ३।२।७७। इति क्विप्।) शुभान्वितः। शम्पूर्व्वष्ठाधातोः क्विप्प्रत्ययेन निष्पन्नमेतत्॥

शंस्यः, त्रि, (शंस+ण्यत्। "ईडवन्दवृशंसदुहां ण्यतः।" ६।१।२१४। इत्याद्युदात्तः।) हिंस्यः। स्तुत्यः। शन्सधातोः घ्यण्प्रत्ययेन निष्पन्नमेतत्॥

शक, ऌ ङ त्रासशङ्कयोः। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-त्रासे अक०-शङ्कायां सक०-सेट्।) त्रासो भयम्। शङ्का संशयारोपः। ङ, शक्यते पापात्मनेन। ऌ, शकते पुरुषत्वं स्थाणौ। स्थाणुर्वा पुरुषो वा इति संशयमारोपयतीत्यर्थः। इति दुर्गादासः॥

शक, न इर् क्ष शक्तौ। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सक० च-वेट्।) न, शक्नोत्यशक्यमप्यर्थो विजेतुं य इति हलायुधः। इर्, अशकत् अशक्षीत् अशाक्षीत्। लृदित्त्वेनाशकदिति तु दृश्यते। क्ष, शक्षिष्यति शक्यति। एतद्धातोरादौ न स्यादिः। दासैवानिमार्षियनी। पञ्चस्वरानुबन्धः केषाञ्चिदनुरोधात्। द्वावेव मङ्गलैषौ। तथा च। शक्नोऽस्मि मनुर्भवता विजेतु-

इति वसन्तराजशाकुने विचारिताः शुभावहाः ॥
अथ नराङ्गितविचारः ।

"अथाभिधास्ये द्विपदेषु तावत्
प्रधानभावात् शकुनं नराणाम् ।
नैमित्तिकं यत् प्रतिभाय सर्व्वं
फलं शुभाशुभयोर्ब्रवीति ॥
नरोऽभिरूपः सितवस्त्रमाल्यो
वाचं प्रशस्तां मधुराञ्च जल्पन् ।
एवंविधा योषिदपि प्रयाणे
प्रवेशकाले च करोति सिद्धिम् ॥*॥
वमद्विकेशो हृतमानगर्व्वः
पिशाङ्गनग्नान्धजतैलदिग्धाः ।
रजस्वला गर्भवती वदन्ती
मलान्वितोन्मत्तजराधवाश्च ॥
दीनो द्विपत्कृष्णविमुक्तकेशाः
क्लेशकस्थाः खरवैरिभस्थाः ।
सव्याधिबाक्रन्दनपुंसकाद्या
दुःखावहाः सर्व्वसमीहितेषु ॥*॥
पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो
वेश्या कुमारी सुहृदः सुकेशाः ।
नार्य्यो नराश्चाश्वरथाधिरूढ़ाः
शुभाय दृष्टाः शकुनोद्यमेषु ॥*॥
कृष्णाम्बराः कृष्णविलेपनाढ्याः
कृष्णां स्रजं मूर्द्ध्नि विधारयन्ती ।
दृष्टा सकोपा यदि कृष्णवर्णा
नारी नरैस्तद्विपदो भवन्ति ॥*॥
श्वेताम्बरा श्वेतविलेपनाढ्या
मालां सितां मूर्द्ध्नि विधारयन्ती ।
दृष्टा प्रहृष्टा यदि गौरवर्णा
नारी नरैः स्यात्तदभीष्टसिद्धिः ॥
धृतातपत्रः सुविशुद्धवासाः
पुष्पान्वितश्चन्दनचर्च्चिताङ्गः ।
निश्रावयुक्तः कृतभोजनो वा
विप्रः पठन् यच्छति सर्व्वसिद्धिम् ॥
अभ्युपगच्छति यस्य हि याने
स्त्रीपुरुषोऽप्यथवा फलहस्तः ।
सर्व्वसमीहितसिद्धिरवश्यं
तस्य नरस्य भवत्यचिरेण ॥"

इति वसन्तराजशाकुने नराङ्गितेङ्गित-
वर्णनम् ॥*॥

"गच्छेति पृष्ठे पुरतस्तथैव
वागीदृशी केनचिदुच्यमाना ।
सर्व्वाशिवस्यातिशयेन ताभ्य-
श्चित्तस्य तुष्टिर्विनयाय पुंसाम् ॥
सिद्धेत्र विरावा नहि छिन्दि भिन्दि
चेत्यादयः शत्रुवधोद्यतानाम् ।
क्व यासि मा गच्छत चैवमाद्याः
प्रयोजनारम्भनिवारणार्थाः ॥
स्थैर्य्यं स्थिरार्थाद्गमनं तदर्था-
द्वाक्यान्निवृत्तिर्विनिवर्त्तितार्थात् ।
लाभं जयं मङ्गममङ्गलं वा
बुध्येत तत्तत्प्रतिपादनार्थात् ॥

उग्रं भवेद्रोदनमग्रभागे
भयं भवेद्वह्निविभागभूते ।
नैर्ऋत्यकोणे रणमार्गरोधो
वायव्यकोणे रुदितं सुहृद्भ्यः ॥
मृत्युः सुतानां रुदितेन पृष्ठे
लाभो भवेत्तत्र निवर्त्तनेन ।
मृत्युस्तदाग्रे रुदितेन शत्रुः
सिद्धिं विधत्ते रुदितं रिपूणाम् ॥"

इति वसन्तराजशाकुने नराङ्गिते उपश्रुति-
प्रकरणम् ॥*॥ चटकचक्रवाकटकटिट्टिभजार्- खञ्जनभासभारद्वाजमयूरकपिञ्जल-लावककरक्रौ-
लूककपोतगोवत्सकुक्कुटकलविङ्कभारतीदाय-
खञ्जनकाकपिङ्गलारूपाणि शकुनानि घोटक-
वृषमहिषखरगोमहिष्यजाजमेषैड़कोष्ट्रकुन्द-
रीमृगविड़ालमार्जारवानरश्वगवराहशशकलायनशु-
लद्रश्चिकपिपीलिकापल्ली-कुक्कुरादिरूपशकुना-
नि च वसन्तराजशाकुने द्रष्टव्यानि । हस्ति-
शशकमृगालषट्पदशरभसर्परूपाणि शकुनानि
तत्तच्छब्दे द्रष्टव्यानि ॥

शकुनः, पुं, (शक + उनः ।) पक्षिमात्रम् । (यथा,
महाभारते । १ । ७२ । १० ।
"तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन् ॥")
पक्षिविशेषः । गृध्र इति ख्यातः । इति मेदिनी ॥
कश्यपपत्नीताम्रायाः श्येनगृध्रादयः पुत्राः । इति
श्रीभागवतम् ॥ गृध्रस्याशुभफलं यथा,—
"वामेऽपसव्ये पुरतश्च पृष्ठे
युद्धं विभेदं मरणं क्षयञ्च ।
गृध्रः स्थितः सन् कुरुते क्रमेण
शब्दोऽपसव्योऽस्य विपत्तिहेतुः ॥"
इति वसन्तराजशाकुनम् ॥
विप्रभेदः । इत्युणादिकोषः । तद्विवरणं भाग-
वते उक्तम् । गीतविशेषः । तत्तु उत्सवादिषु
मङ्गलार्थगेयम् । इति जयपालः ॥ शुभशंसी ।
इति शब्दरत्नावली ॥

शकुनज्ञा, स्त्री, ( शकुनं जानातीति । ज्ञा + कः ।
स्त्रियामाप् । ) ज्येष्ठी । इति त्रिकाण्डशेषः ॥
शकुनज्ञातरि, त्रि ॥ ( यथा, कथासरित्-
सागरे । ३१ । ५३ ।
"प्राहिणोत्प्राङ्निमित्ताापि स्वसख्या शकुनज्ञया ।
स्वतन्त्रोऽभिनवारूढ़ो युवतीनां मनोभवः ॥")

शकुनिः, पुं, ( शक्नोति उन्नेतुमात्मानमिति ।
शक + "शकेरुनोन्तोन्त्युनयः ।" उणा० ३।४६।
इति उनिः । ) पक्षी । इत्यमरः ॥ ( यथा,
मनुः । ५ । ११ ।
"क्रव्यादान् शकुनीन् सर्व्वांस्तथा ग्राम-
निवासिनः ।
अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्जयेत ॥")
चिल्लपक्षी । इति हेमचन्द्रः ॥ सौवलः । स तु
कौरवमातुलः । (अयं हि दुर्य्योधनमन्त्री । द्यूते
पाण्डवान् जित्वा वनं प्रेरयामास । असौ हि
कौरवयुद्धे सहदेवेन निहतः । एतद्विवरणं महा-
भारते शल्यपर्व्वणि द्रष्टव्यम् ॥ ) ववादेकादश-
करणान्तर्गताष्टमकरणम् । इति मेदिनी ॥
तत्करणजातफलम् ।
"परधनवनहर्त्ता वञ्चकः क्रूरचेष्टः
कलहनकरवाणी व्याहृतव्याभिपक्षः ।
अतिशयपरदारासक्तचित्तः सदोषो
भवति शकुनिजन्मा मानवः शीघ्रकर्म्मा ॥"
इति कोष्ठीप्रदीपः ॥*॥
दुःसहपुत्रः । यथा,—
"दुःसहस्याभवत् भार्य्या निर्म्मार्ष्टिर्नाम नामतः ।
जाता कलेस्तु भार्य्यायां ऋतौ चण्डालदर्शनात् ॥
तयोरपत्यान्यभवन् जगद्व्याप्तानि षोड़श ।
अष्टौ कुमाराः कन्याश्च तथाष्टावतिभीषणाः ॥
दन्ताकृष्टिस्तथोक्तिश्च परिवर्त्तस्तथा परः ।
अङ्गधृक् शकुनिश्चैव गण्डप्रान्तरतिस्तथा ॥"
तस्य पञ्च पुत्रा यथा,—
"श्येनकाककपोतांश्च गृध्रोलूकौ च वै सुतान् ।
जनयामास शकुनिः पञ्च जगृहुस्तान् सुरासुराः ॥
श्येनं जग्राह वै मृत्युः काकं कालो गृहीत-
वान् ।
उलूकं निर्ऋतिश्चापि जग्राहातिभयावहम् ॥
गृध्रं व्याधिस्तदीशोऽस्य कपोतञ्च स्वयं यमः ।
एतेषामेव चैवोक्ताः हानाः पापोपपादने ॥
तस्मात् श्येनादयो यस्य निलीयन्ते शिरस्यथ ।
तेनात्मरक्षणायालं शान्तिः कार्य्या द्विजोत्तम ॥
गेहे प्रकृतिरेतेषां लक्ष्मीर्ड़ुनिवेशनम् ।
न शक्तं वर्जयेन्नित्यं कपोताक्रान्तमस्तकम् ॥
श्येनः कपोतो गृध्रो वा कौशिको वा गृहे
द्विजः ।
प्रविष्टः कथयत्यन्तं वसतां तत्र वेश्मनि ॥
ईदृक् परित्यजेद्गेहं शान्तिं कुर्य्याद्द्विजोत्तम ।
स्वप्नेऽपि हि कपोतस्य दर्शनं न प्रशस्यते ॥"
इति मार्कण्डेयपुराणे दुःसहवंशोत्पत्तिनामा-
ध्यायः ॥*॥ विकुक्षिपुत्रः । यथा,—
"वैवस्वतमनोरासीदिक्ष्वाकुः पृथिवीपतिः ।
तस्य पुत्रशतं चासीद्विकुक्षिर्ज्येष्ठ उच्यते ॥
सोऽयोध्याधिपतिर्वीरस्तस्य पञ्चदश स्मृताः ।
शकुनिप्रमुखाः पुत्रा रक्षिता रोमहर्षिताः ॥"
इति वह्निपुराणे सगरोपाख्याननामाध्यायः ॥

शकुनिप्रपा, स्त्री, (शकुनीनां पक्षिणां पानार्थं या
प्रपा । ) पक्षिणः पानीयशाला । तत्पर्य्यायः ।
श्रीग्रहः २ । इति हारावली ॥

शकुनी, स्त्री, श्यामापक्षी । इति राजनिर्घण्टः ॥
चटकी । इति केचित् ॥ ( पक्षिरूपधारिणी
पूतना । यथा, महाभारते । ५ । १३० । ४५ ।
"अनेन हि हता बाल्ये पूतना शकुनी तथा ।"
तथा च हरिवंशे । ६२ । १—२ ।
"कस्यचित्त्वथ कालस्य शकुनीवेशधारिणी ।
धात्री कंसस्य भोजस्य पूतनेति परिश्रुता ॥
पूतना नाम शकुनी घोरा प्राणिभयङ्करी ।
आजगामार्द्धरात्रे तु पक्षौ क्रोधात् विधु-
न्वती ॥")

नव शक्तयो यथा,—
"नव पद्मे चाष्टदले मध्ये च भक्तिपूर्व्वकम् ।
वैष्णवीञ्चैव ब्रह्माणीं रौद्रीं माहेश्वरीं तथा ॥
नारसिंहीञ्च वाराहीमिन्द्राणीं कार्त्तिकीं तथा ।
सर्व्वशक्तिस्वरूपाञ्च प्रधानां सर्व्वमङ्गलाम् ॥
नवशक्तीश्च संपूज्य षष्ठे देवांश्च पूजयेत् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६१ अध्यायः ॥*॥
पञ्चाशद्विष्णुशक्तयो यथा,—
"कीर्त्तिः कान्तिस्तुष्टिपुष्टी धृतिः शान्तिः क्रिया दया ।
मेधा सहर्षा श्रद्धा स्याल्लज्जा लक्ष्मीः सरस्वती ॥
प्रीती रती रमा प्रोक्ताः क्रमेण स्वरशक्तयः ।
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ॥
विरजा विजया विश्वा विनदा सुनदा स्मृतिः ।
ऋद्धिः समृद्धिः शुद्धिश्च भक्तिर्मुक्तिर्मतिः क्षमा ॥
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा ।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा ॥
अमोघा विद्युता चेति शक्तयः सर्व्वकामदाः ।
एताः प्रियतमाङ्केषु निषण्णाः सस्मिताननाः ॥
विद्युद्दामसमानाङ्गाः पङ्कजाभयबाहवः ॥"*॥
पञ्चाशद्रुद्रशक्तयो यथा,—
"गुणोदरी स्याद्विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा समीरिता ॥
सुदीर्घमुखीगोमुख्यौ दीर्घजिह्वा तथैव च ।
कुण्डोदर्य्यूर्द्ध्वकेश्यौ च तथा विकृतमुख्यपि ॥
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ।
सुश्रीमुखी चैव विद्यामुखीताः स्वरशक्तयः ॥
महाकालीसरस्वत्यौ सर्व्वसिद्धिसमन्विते ।
गौरी त्रैलोक्यविद्या स्यान्मन्त्रशक्तिस्ततः परम् ॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता ।
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ॥
रूपिणी वीरिणी पश्चात् काकोदर्य्यपि पूतना ।
स्याद्भद्रकाली योगिन्यौ शङ्खिनी गर्ज्जिनी तथा ॥
कालरात्रिश्च कुब्जिन्या कपर्द्दिन्यपि वज्रया ।
जया च सुमुखेश्वर्य्या रेवती माधवी ततः ॥
वारुणी वायवी प्रोक्ता पश्चाद्रक्षोविदारिणी ।
ततश्च सहजा लक्ष्मीर्व्यापिनी मायया न्विता ॥
एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः ॥
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः ॥"
इति प्रपञ्चसारः ॥*॥
कुलशक्तयो यथा,—
"शक्तयः परमेशानि ! विदग्धाः सर्व्वयोषितः ।
नटी कापालिकी वेश्या मालिनी कुङ्कुमालिनी ॥
चाण्डाली च कुलाली च रजकी नापिताङ्गना ।
गोपिनी योगिनी शुद्रा ब्राह्मणी राधकन्यका ॥
काचाङ्गना च देवेशि ! तथैव शङ्खकारिणी ।
एता षड्विंशतिः कन्या देवानामपि दुर्लभा ॥
दैवज्ञा वाधवामा च तथा मांसप्रहारिणी ।
बौद्धा च यवनी देवि तथा रसपसारिणी ॥
वेश्या चतुर्व्विधा प्रोक्ता द्विविधा कुङ्कुमालिनी ।
धीवरी द्विविधा प्रोक्ता तथैव गणिकाङ्गना ॥
कुम्भकारी द्विधा प्रोक्ता तथैव गोपिनी स्मृता ।
घातवैद्याङ्गना देवि यवनी द्विविधा स्मृता ॥
बौद्धकन्या त्रिधा देवि तथा कोचाङ्गना प्रिया ।
पूर्व्वोक्ताभिः सहैकत्र चतुःषष्टिश्च शक्तयः ॥"
इति रेवतीतन्त्रे ३ पटलः ॥*॥
अपि च ।
"पञ्चाचारेण देवेशि ! कुलशक्तिं प्रपूजयेत् ।
नटी कापालिकी वेश्या रजकी नापिताङ्गना ॥
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ।
मालाकारस्य कन्या च नव कन्या प्रकीर्त्तिताः ।
विशेषवैदग्ध्ययुताः सर्व्वा एव कुलाङ्गनाः ।
रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी
पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्ध्रुवम् ॥"
इति गुप्तसाधनतन्त्रे १ पटलः ॥*॥
तस्याः प्रशंसा यथा ।
"शक्तिं विना महेशानि ! सदाहं शवरूपकः ।
शक्तियुक्तो यदा देवि ! शिवोऽहं सर्व्वकामदः ॥
शक्तियुक्तं जपेन्मन्त्रं न मन्त्रं केवलं जपेत् ।
सावित्रीसहितो ब्रह्मा सिद्धोऽभूद्गगनन्दिनि ॥
द्वारवत्यां कृष्णदेवः सिद्धोऽभूत् सत्यया सह ।
तथा कोचवधूसङ्गात्मम सिद्धिर्व्वरानने ॥
ईश्वरोऽहं महादेवि ! केवलं शक्तियोगतः ।
शक्तियोगेन देवेशि यदि सिद्धिर्न जायते ॥
तदैव परमेशानि मम वाक्यं वृथा भवेत् ।
यद्दत्तं जलगण्डूषं शक्तिवक्त्रे सुरेश्वरि ! ॥
सिन्धुरूपं महेशानि ! तज्जलं नात्र संशयः ।
स्वीयेष्टदेवीभावेन भोजयेत्ताञ्च यत्नतः ॥
शक्तिश्च कथ्यते देवि शृणुष्व सुरसुन्दरि ।
त्रयोदशाब्दादूर्द्ध्वं या पञ्चविंशतिवार्षिकी ॥
अप्रसूता विशेषेण प्रथमेऽपि भवेत् प्रिये ।
सुन्दरी तु विशेषेण प्रसूता वाप्रसूतिका ॥
अवश्यं प्रथमं कुर्य्यात् शक्तिमात्रे महेश्वरि ॥"
इति शक्तिकागमसर्व्वस्वम् ॥*॥
तस्या उत्पत्तिमाहात्म्यादिर्यथा,—
नारायण उवाच ।
"यद् युक्ता बुद्धिमन्तो न वक्तुमीशते नराः ।
सर्व्वे शक्त्यात्मका विश्वे शक्तिमन्तो हि जीविनः ॥
ब्रह्मादितृणपर्य्यन्तं सर्व्वं प्राकृतिकं जगत् ।
सत्यं नित्यं विना साध्व मया शक्तिः प्रकाशिता ॥
आविर्भूता च सा मत्तः सृष्टौ देवी मदिच्छया ।
तिरोहिता च सा शेषे सृष्टिसंहरणे मयि ॥
सृष्टिकर्त्री च प्रकृतिः सर्व्वेषां जननी परा ।
मम तुल्या च मन्माया तेन नारायणी स्मृता ॥
सुचिरञ्च तपस्तप्तं शम्भुना ध्यायता च माम् ।
तेन तस्मै मया दत्ता तपसां फलरूपिणी ॥
व्रतञ्च लोकशिक्षार्थमस्या न स्वार्थमेव च ।
स्वयं व्रतानां तपसां फलदात्री जगत्त्रये ॥
मायया मोहिताः सर्व्वे किमस्या वास्तवं यतम् ।
साधनमस्या व्रतफलं कल्पे कल्पे पुनः पुनः ॥
सुरेश्वरा यदंशाश्च ब्रह्मविष्णुमहेश्वराः ।
कलाः कलांशरूपाश्च जीविनश्च सुरादयः ॥
मृदा विना कुलालश्च घटं कर्त्तुं यथाक्षमः ।
विना स्वर्णं स्वर्णकारः कुण्डलं कर्त्तुमक्षमः ॥
विना शक्त्या तथाहञ्च सृष्टिं कर्त्तुमक्षमः ।
शक्तिप्रधाना सृष्टिश्च सर्व्वदर्शनसम्मता ॥
अहमात्मा च निर्लिप्तोऽदृश्यः साक्षी च देहिनाम् ।
देहाः प्राकृतिकाः सर्व्वे नश्वराः पाञ्चभौतिकाः ॥
अहं नित्यशरीरी च भक्तानुग्रहविग्रहः ।
सर्व्वाधारा च प्रकृतिः सर्व्वात्माहं जगत्सु च ॥
अहमात्मा मनो ब्रह्मा ज्ञानरूपी महेश्वरः ।
पञ्च प्राणाः स्वयं विष्णुर्बुद्धिः प्रकृतिरीश्वरी ॥
शक्तयो निद्रादयश्चैताः सर्व्वाश्च प्रकृतेः कलाः ।
सा च शैलेन्द्रकन्येयं इति वेदनिरूपितम् ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डे ७ अध्यायः ॥*॥
अपि च ।
"सा शक्तिः सृष्टिकाले च पञ्चधा चेश्वरेच्छया ।
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः ।
प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥
ऐश्वर्य्याधिष्ठातृदेवी सर्व्वमङ्गलकारिणी ।
परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥
विद्याधिष्ठातृदेवी या परमेशस्य दुर्लभा ।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्त्तिता ॥
बुद्ध्यधिष्ठातृदेवी या सर्व्वशक्तिस्वरूपिणी ।
सर्व्वज्ञानात्मिका सर्व्वा सा दुर्गा दुर्गनाशिनी ॥
वागधिष्ठातृदेवी या शास्त्रज्ञानप्रदा सदा ।
कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती ॥
पञ्चधादौ स्वयं देवी मूलप्रकृतिरीश्वरी ।
ततः सृष्टिक्रमेणैव बहुधा कलया च सा ।
योषितः प्रकृतेरंशाः पुमांसः पुरुषस्य च ॥
इति च ब्रह्मवैवर्त्ते गणेशखण्डे ४० अध्यायः ॥*॥
ब्रह्माणीशक्त्युत्पत्तिर्यथा,
"ततो ब्रह्मादयो देवा भयं जग्मुः सवासवाः ।
यदि स्यान्निर्ज्जितो देवः क्षयः सर्व्वदिवौकसाम् ॥
एतस्मिन्नन्तरे शक्र ! ब्रह्मा चिन्तयते क्रियाः ।
स्त्रीरूपधारिणी भूत्वा सहायत्वं महेश्वरे ॥
क्षिप्रं कुरु स्वकार्य्यं तं एवं विश्वेश्वरे रणे ।
ततो द्योतितवान् प्रभुः स्वशक्तिं किरणोज्ज्वलाम् ॥
ब्रह्मरूपधरा किन्तु ललनाकारविग्रहाम् ।
हंसस्यन्दनमारूढ़ा स्वकीयायुधधारिणी ॥
तर्ज्जयन्ती महौघेन दानवानां भयङ्करी ।
तस्य घोराणि कर्म्माणि दृष्ट्वा स विस्मयन् शिवः ॥
का पुनः सद्गुः सुश्लेषा सदातिप्रतिपक्षजित् ।
तस्याः शक्तिं द्वितीयाञ्च रचयामि अपराजिताम् ॥"
इति देवीपुराणे रुरुवधे ब्रह्माण्युत्पत्तिः ॥*॥
नन्दातीर्थे शक्तिमन्त्रविचारनिषेधो यथा ।
"योऽसावनादिमध्यान्तशिवशक्तिमयः परः ।
तस्यैव परमानन्दा सर्व्वकिल्विषनाशिनी ॥
तत्प्रभावेण प्राप्नोति तपोयज्ञादिकं फलम् ।
मन्त्रायां देवशक्तीनां न विचारो वरानने ॥"
इति देवीपुराणे नन्दाकुण्डप्रवेशः अष्टमाध्यायः ॥*॥

प्रकृतिः। यथा,—
"प्रधानं प्रकृतिः शक्तिर्नित्या चाविकृतिस्तथा।
एतानि तस्या नामानि पुरुषं या समाश्रिता॥"
अस्या गुणाश्च।
"सत्त्वं रजस्तमश्चेति विज्ञेयाः प्रकृतेर्गुणाः।"
इति भावप्रकाशः॥ *॥

शक्तिविषयकपुष्पाणि यथा,—
"अथ पुष्पं प्रवक्ष्यामि कर्म्मयोगे महेश्वरि।
शृणुष्व परया भक्त्या यथोक्तं ब्रह्मणा पुरा॥
कमले करवीरे च कुसुम्भे तुलसीदलम्।
जात्यशोके केतकी द्वे कुमारीचम्पकोत्पलम्॥
कुन्दमन्दारपुन्नागपाटलानागचम्पकम्।
आरग्वधं कर्णिकारं मालती नवमल्लिका॥
सौगन्धिकं बकोरण्टं पलाशाशोककिंशुकाः।
सिन्धुवारो ह्यपामार्गबकुलौ कच्चकाञ्चनम्॥
आम्रचेलं दमनकं मरुवकं ततः परम्।
अयनं जलकर्पूरं तगरञ्च जवा तथा॥
शिवपुष्पं द्रोणपुष्पं कामराजं सुकेतकम्।
अन्यानि वनपुष्पाणि जलजस्थलजानि च।
गिरिजानि देशजानि नानापुष्पाण्यतः परम्॥"
इति प्रपञ्चसारः॥

शक्तिग्रहः, पुं, (शक्तिं गृह्णातीति। शक्ति + ग्रह + "शक्तिलाङ्गुलाङ्कुशेति।" ३।२।९। इत्यस्य वार्त्तिकोक्त्या अच्।) शिवः। कार्त्तिकेयः। शक्तिं गृह्णाति यः इत्यर्थे शक्तिशब्दपूर्व्वकग्रह-धातोरल्प्रत्ययेन निष्पन्न इति केचित्॥ (शक्ते-र्ग्रहो ग्रहणम्।) शब्दशक्तिज्ञानम्। यथा। 'अस्मात् शब्दात् अयमर्थो बोद्धव्य इतीश्वरेच्छा शक्तिरिति तार्किकाः। तद्ग्रहणञ्च व्याकरणा-दिभ्यः। अतएव।
'शक्तिग्रहं व्याकरणोपमान-
कोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः॥'
इति प्राञ्चः।" इति दुर्गादासः॥

शक्तिग्राहकः, पुं, व्याकरणोपमानादिः। शक्ति-ग्रहीता च। शक्तिं ग्राहयति गृह्णाति च इत्यर्थे ण्यन्ताण्यन्तग्रहधातोर्ण्वक(ण्वुल्)प्रत्ययेन निष्पन्नमेतत्॥

शक्तिधरः, पुं, (धरतीति। धृ + अच्। शक्तेर्धरः।) कार्त्तिकेयः। इत्यमरः॥ (यथा, हरिवंशे। ७३।६।
"बलेन वपुषा चैव वाक्येन चरितेन च।
स्वामी शक्तिधरस्तुल्यो न तु कश्चन मानुषः॥")
शक्तिधारके, त्रि॥ (यथा, बृहत्संहितायाम्। ५८। ४१।
"स्कन्दः कुमाररूपः शक्तिधरो बर्हिकेतुश्च॥")

शक्तिपर्णः, पुं, सप्तपर्णवृक्षः। इति जटाधरः॥

शक्तिपाणिः, पुं, (शक्तिरस्त्रविशेषः पाणौ यस्य।) कार्त्तिकेयः। इति हलायुधः॥

शक्तिभृत्, पुं, (शक्तिं बिभर्त्तीति। भृ + क्विप्। तुक् च।) कार्त्तिकेयः। इति हेमचन्द्रः॥ शक्त्यस्त्रधारके, त्रि॥

शक्तिहेतिकः, त्रि, (शक्तिर्हेतिः प्रहरणास्त्रं यस्य।) शक्त्यस्त्रधारियोद्धा। तत्पर्य्यायः। शाक्तीकः २। इत्यमरः॥ शक्त्यायुधधरः ३। इति शब्दरत्नावली॥

शक्तुः, पुं स्त्री, (शक + बाहुलकात् तुन्।) भर्ज्जित-यवादिचूर्णम्। छातु इति भाषा। यथा,—
"धाना भृष्टयवे भूम्नि स्त्रियां पुं भूम्नि शक्तवः।
केचित्तु शक्तुरस्त्रीति वन्धुरा भूमनि स्त्रियाम्॥"
इति जटाधरः॥

अस्य गुणाः।
"यवानां शक्तवो रूक्षा लेखना वह्निवर्द्धनाः।
वातला कफरोगघ्ना वातवर्च्चोऽनुलोमनाः॥
धानाश्चणकाश्च तेऽतीव दुर्जरा लेखनाः स्मृताः।
गुर्व्वी पिण्डीकृतास्वर्थं लघ्वी सैव विपर्य्ययात्।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका॥"
इति राजवल्लभः॥

अथ शक्तवः।
"धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि शक्तवः।"
तत्र यवशक्तवः।
"यवजाः शक्तवः शीता दीपना लघवः सराः।
कफपित्तहरा रूक्षा लेखनाश्च प्रकीर्त्तिताः॥
ते पीता बलदा वृष्या बृंहणा भेदनास्तथा।
तर्पणा मधुरा रुच्याः परिणामे बलावहाः॥
कफपित्तश्रमक्षुत्तृड्व्रणनेत्रामयापहाः।
प्रशस्ता घर्म्मदाहार्त्ता व्यायामार्त्तशरीरिणाम्॥"
अथ चणकयवशक्तवः।
"निस्तुषैश्चणकैर्भृष्टैस्तुर्य्यांशैश्च यवैः कृताः।
शक्तवः शर्करासर्पिःशस्ता ग्रीष्मेऽतिपूजिताः॥"
अथ शालिशक्तवः।
"शक्तवः शालिसम्भूता वह्निदा लघवो हिमाः।
मधुरा ग्राहिणो रुच्याः पथ्याश्च बलशुक्रदाः॥
न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून्।
न जलान्तरितान् न द्विः शक्तूनद्यान्न केवलान्॥
पृथक्पानं पुनर्दानं सामिषं पयसा निशि।
दन्तच्छेदनमुष्णञ्च सप्त शक्तुषु वर्ज्जयेत्॥"
इति भावप्रकाशः॥

जन्मतिथौ तद्भक्षणफलम्। ज्योतिषे।
"शक्तून् खादति यस्तु तस्य रिपवो नाशं
प्रयान्ति ध्रुवं
भुङ्क्ते यस्तु निरामिषं न हि भवेत् जन्मान्तरे
पक्षिणः।"
इति तिथ्यादितत्त्वम्॥

मेषसंक्रान्त्यां तद्दानविधिर्यथा। स्मृतिः।
"मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी।"
महार्णवे।
"यो ददाति हि मेषादौ शक्तूनम्बुघटान्वितान्।
पितॄनुद्दिश्य विप्रेभ्यः सर्व्वपापैः प्रमुच्यते।
विप्रेभ्यः प्राङ्कुरे छत्रं पितृभ्यो विषुवे शुभम्॥"
इति तिथ्यादितत्त्वम्॥

चातुर्मास्यव्रते प्रातःस्नानस्य घृतशक्तवो दक्षिणा यथा। गारुडेऽन्यत्।
"नित्यस्नाने हविर्द्देयाम्भिःशिवे घृतशक्तवः॥"
नित्यस्नाने प्रातःस्नाने। इति मलमासतत्त्वम्॥

शक्तुकः, पुं, विषभेदः। तस्य लक्षणस्वरूपं यथा,
"यद्ग्रन्थिः शक्तुकेनैव पूर्णमध्यः स शक्तुकः॥"
इति भावप्रकाशः॥

शक्तुफला, स्त्री, शमीवृक्षः। इत्यमरः॥

शक्तुफली, स्त्री, शमीवृक्षः। इति शब्दरत्नावली॥

शक्यार्द्धः, पुं, (शक्तेरर्द्धः।) श्रमद्वारा कुक्षिललाट-ग्रीवास्थतन्नो घर्म्मः दीर्घनिश्वासश्च। यथा,—
"कुक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते।
शक्त्यर्द्धं तं विजानीयादायतोच्छ्वाससेव च॥"
इति राजवल्लभः॥

शक्तिः, पुं, वशिष्ठमुनेर्ज्येष्ठपुत्त्रः। इति पुराणम्॥ (यथा, महाभारते। १। १७७। ६।
"अपश्यदजितः संख्ये मुनिं प्रतिमुखागतम्।
शक्तिं नाम महाभागं वशिष्ठकुलवर्द्धनम्।
ज्येष्ठं पुत्त्रं पुत्त्रशतात् वशिष्ठस्य महात्मनः॥"
अयं हि इक्ष्वाकुवंशीयं कल्माषपादनृपतिं अशपत्। स च नृपती राक्षसो भूत्वा एन-मभक्षयत्। एतद्वृत्तान्तस्तु महाभारते १।१७७ अध्याये द्रष्टव्यः॥)

शक्रः, त्रि, प्रियंवदः। इत्यमरटीकायां भरतः॥

शक्नुः, त्रि, प्रियंवदः। इत्यमरः॥

शक्म,[न्] पुं, (शक + "अशिशकिभ्यां छन्दसि।" उणा० ४। १४६। इति मनिन्।) शक्तिः। शकधातोरौणादिकमनिन्प्रत्ययेन निष्पन्नम्। इति सिद्धान्तकौमुदी॥ (उज्ज्वलदत्तस्तु। इत्युज्ज्वलः। ४। १४६॥ क्ली, शक्यतेऽनेनाभिमतं प्राप्तुं शक्नो-तीष्टं साधयितुं वा शक्यते कर्त्तुमिति वा। शक + मनिन्। कर्म्म। इति निघण्टुः। २। १॥ यथा, ऋग्वेदे। ६। ३४। २।
"दुहन्ति शक्मना पयः॥"
"शक्मना कर्म्मणा।" इति तद्भाष्ये सायणः॥)

शक्यः, त्रि, (शक + "शकिसहोश्च।" ३।१।९९। इति यत्।) समर्थनीयः। (यथा, रघुः। २।४९।
"शक्योऽस्य मन्युर्भवता विनेतुं
गाः कोटिशः स्पर्शयता घटोघ्नीः॥")
शक्याशयः। (यदा भावे यत् स्यात् तदा क्लीवलिङ्गः स्यात्। यथा, गीतायाम्। १८।११।
"नहि शक्यं देहभृता त्यक्तुं कर्म्माण्यशेषतः॥"
तथाच रामायणे। २। १२। ५।
"तानि सर्व्वाणि संयन्तुं शक्यं राम जितेन्द्रियैः॥")
पुं, वाच्योऽर्थः। यथा,—
"शक्योऽर्थोऽभिधया ज्ञेयः लक्ष्यो लक्षणया
मतः।
व्यङ्ग्यो व्यञ्जनया चैषास्तिस्रः शब्दस्य वृत्तयः॥"
इत्यलङ्कारशास्त्रम्॥

अन्यच्च।
"शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः।"
इति भाषापरिच्छेदः॥

अपि च। "ईश्वरसङ्केतः शक्तिस्तया अर्थबोधकं पदं वाच्यम्। यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एव मुख्यार्थ उच्यते।" इति शक्तिवादः॥

शक्यतावच्छेदकं, त्रि, (शक्यताया अवच्छेदकम् ।) शक्यांशे भासमानधर्म्मः । यथा ।
"एवञ्च तादृशधर्म्मस्य शक्यतावच्छेदकत्वं दुर्व्वारमेव ।" इति शक्तिवादः ॥

शक्रः, पुं, ( शक्नोति दैत्यान् नाशयितुम् । शक + "स्फायितञ्चीति ।" उणा० २।१३ । इति रक् ।) इन्द्रः । इत्यमरः । ( यथा, रघुः । ३ । ३९ ।
"धनुर्भृतामग्रत एव रक्षिणां
जहार शक्रः किल गूढविग्रहः ॥")
कुटजवृक्षः । अर्ज्जुनवृक्षः । इति मेदिनी ॥
ज्येष्ठानक्षत्रम् । यथा,—
"शक्रो निर्ऋतिस्तोयं विश्वविरिञ्चौ हरिर्वसुर्वरुणः ।
अजपादोऽहिर्बुध्नः पूषा चेतीश्वरा भानाम् ॥"
इति ज्योतिस्तत्त्वम् ॥
चतुर्द्दशेन्द्रा यथा,—
"विश्वभुक् च विपश्चिच्च सुचित्तिः शिखिरेव च ।
विभुर्मनोजवश्चैव तथोजस्वी बलिस्तथा ॥
अद्भुतश्च तथा शान्तिस्तथा देवचरो वृषः ।
ऋतधामा दिवःस्वामी शुचिः शक्राश्चतुर्द्दश ॥"*
मासदिनमासाब्देषु इन्द्राणां नाशसंख्या यथा ।
"मासे दिने वै नश्यन्ति चतुर्द्दश पुरन्दराः ।
शतानि त्रीणि चत्वारि विंशत्या सहितानि च ।
अब्दे पञ्चसहस्राणि चत्वारिंशच्छतानि च ॥"
इत्यादि वह्निपुराणे गणभेदनामाध्यायः ॥*॥
इन्द्रत्वप्राप्तिकारणं यथा,—
इन्द्र उवाच ।
"रमाकान्त भवल्लीले कृतं क्रतुशतं पुरा ।
तेन पुण्येन सम्प्राप्तं मया पौरन्दरं पदम् ॥
इदानीं नूतनः कोऽपि जातो दिवि पुरन्दरः ।
न तेन धर्म्मो विहितो न तेन क्रतवः कृताः ।
मम सिंहासनं दिव्यं कथमाक्रान्तमच्युत ॥
इतीदं वचनं तस्य श्रुत्वा वाक्यं रमापतिः ।
उन्मीलितस्मिताक्षोऽसावुवाच मधुरं वचः ॥
श्रीभगवानुवाच ।
देवादयो मनुष्यान्ता मम सेवापरायणाः ।
मद्ध्यानरता लोका मद्भक्तिस्तुतिपाठकाः ॥
मन्मूर्त्तिषु सदध्याना मत्धामवका इह ।
मत्पादोदकनैवेद्यभोजिनोऽन्यत्क्षमेव ये ॥
मन्नामकीर्त्तनपरा मम स्तुतिपरायणाः ।
मन्मन्त्रजापका नित्यमनन्याश्रयसम्प्रदः ॥
किं विधित्वं किमिन्द्रत्वं देवत्वमपरं किमु ।
तेषामलभ्यं यत्किञ्चित् दुर्लभं नास्ति संसृतौ ॥
किं दानैरल्पफलदैः किं तपोभिः किमध्वरैः ।
सेव्यमानैः क्षितितले न मम प्रीतिमान् सदा ॥
इन्द्र उवाच ।
भगवन् कर्म्मणा केन त्वत्प्रीतिपरो भवेत् ।
तद्वदस्व महाबाहो प्रपन्नभयभञ्जन ॥
श्रीभगवानुवाच ।
अनेकधा मदर्च्चनं मम प्रीतिकरं परम् ।
यद्भक्त्या तत् पदं लेभे तत् शृणुष्व पुरन्दर ॥
अष्टादशाध्यायगीतानां श्लोकमध्यकम् ।
तथा भक्त्या तु संप्राप्तं तव साम्राज्यमुत्तमम् ॥"
इति पाद्मोत्तरखण्डे ९६ अध्यायः ॥
( समर्थे, त्रि । यथा, ऋग्वेदे । ४ । १६ । ६ ।
"विश्वानि शक्रो नर्य्याणि विद्वा-
नपो रिरेच सखिभिर्निकामैः ॥"
"विद्वान् जानन् शक्रः समर्थ इन्द्रः ।" इति तद्भाष्ये सायणः ॥ )

शक्रक्रीडाचलः, पुं, (शक्रस्य क्रीडाचलः क्रीडापर्व्वतः ।) सुमेरुपर्व्वतः । इति हलायुधः ॥

शक्रगोपः, पुं, इन्द्रगोपकीटः । इति जटाधरः ॥ ( यथा, हरिवंशे । ६६ । ५ ।
"नववर्षावसिक्तानि शक्रगोपाकुलानि च ।
नष्टदावाग्निमार्गाणि वनानि प्रचकाशिरे ॥")

शक्रजः, पुं, ( शक्राज्जायते इति । जन + डः । ) काकः । इति त्रिकाण्डशेषः ॥ इन्द्रजाते, त्रि ॥

शक्रजातः, पुं, ( शक्राज्जातः । ) काकः । इति शब्दरत्नावली ॥ इन्द्रजाते, त्रि ॥

शक्रजित्, पुं, (शक्रं जितवानिति । जि + क्विप् ।) रावणपुत्त्रः । इति त्रिकाण्डशेषः ॥ ( यथा, रघुः । १४ । ८३ ।
"अपि प्रभुः सानुशयोऽधुना स्यात्
किमुत्सुकः शक्रजितोऽपि हन्ता ॥")
इन्द्रजेतरि, त्रि ॥

शक्रद्रुमः, ( शक्रस्य द्रुमः । ) देवदारुवृक्षः । इति भावप्रकाशः ॥

शक्रधनुः, [स्] क्ली, ( शक्रस्य धनुः । ) इन्द्रधनुः । इत्यमरः ॥ राङ्गी इति रामधनुक इति च भाषा ॥
"इन्द्रायुधं शक्रधनुः कौशिकायुधमित्यपि ।
ऐरावतं रोहितं स्यादवक्रं यदि तद्धनुः ॥"
इति शब्दरत्नावली ॥
( यथा, महाभारते । ५ । ५६ । ११ ।
"यथाकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च विद्मि किन्नु तत् ॥")

शक्रध्वजः, ( शक्रस्य ध्वजः । ) इन्द्रध्वजः । (यथा, आर्य्यासप्तशत्याम् । २६९ ।
"ते श्रेष्ठिनः क्व सम्प्रति शक्रध्वज ! यैः कृत-
स्तवोच्छ्रायः ।
ईषां वा मेढिं वाधुनातनास्त्वां विशन्ति ॥")
तद्विवरणं यथा,—
नृपवाहन उवाच ।
"भगवन् श्रोतुमिच्छामि तस्य उत्थापनं यथा ।
क्रियते दिन ऋक्षं च सम्यग्विधिं वद ॥
अगस्त्य उवाच ।
तद्यथा कथितं शक्र बृहस्पतिसमीपतः ।
यथा तथा प्रवक्ष्यामि विधिं केतोः समुच्छ्रये ॥
बृहस्पतिरुवाच ।
शुभाहे ऋक्षे करणे मुहूर्त्ते शुभमङ्गले ।
दैवज्ञः सूत्रधारश्च वनं गच्छेत् सहायवान् ॥
देवीप्रतिष्ठाविधिना यात्रायां या प्रचोदिता ।
गत्वा वृक्षं शुभं पुण्यं सवार्ज्जुनप्रियङ्करम् ॥
उदुम्बरासनकर्णेषु पञ्चैते शोभना हरेः ।
ध्वजार्थे वर्जयेद्वत्स देव उद्यानजान् द्रुमान् ॥
कन्या मध्ये तु या यष्टीः करमानेन कल्पयेत् ।
एकादशकरा वत्स नव पञ्च करापरा ॥
अरालतां क्रिमिचितां तथा पक्षिनिकेतनाम् ।
वल्मीकपिल्लवनजां सुशुष्ककोटरान्तराम् ॥
शून्याश्च घटविद्धाश्च तथा स्त्रीनामगर्हिताम् ।
विद्युद्वज्रहताश्चैव दग्धाश्च परिवर्जयेत् ॥
अलाभे चन्दनं ग्राह्यं शालशाकमयं तथा ।
कर्त्तव्यं शक्रचिह्नार्थे न चान्यं वृक्षजं क्वचित् ॥
शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम् ।
ततः संपूजयेद्वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा ॥
नमो वृक्षपते वृक्ष त्वामर्च्चयति पार्थिवः ।
ध्वजार्थं तत्त्वतो नाथ अन्यथाऽपगम्यताम् ॥
दानौ देयो बलिस्तत्र युगवृक्षे तथैव च ।
वासवानां महावृक्षं ज्ञात्वा चान्यत्र गम्यताम् ॥
ध्वजार्थं देवराजस्य न चान्यस्तव अत्र च ।
पूजयित्वा ततो वृक्षं बलिं भूताय दापयेत् ॥
प्रभाते छेदयेद्वृक्षं शुभस्वप्नादिदर्शनैः ।
शुक्लाम्बरधरश्चैव बहुन्नतरणं नदी ॥
वृक्षाभन्नान् शुभान् चौरानारोहेत देवता-
लयम् ।
देवो द्विजस्तथा साधुलिङ्गञ्च हरेरपि ॥
प्रतिमा पूजिता स्वप्ने क्षिप्रं सिद्धिफलप्रदा ।
मत्स्यमांसदधिलाभं रुधिरं स्वतरोदनम् ॥
अगम्यागमनं दृष्ट्वा आशु सिद्धिफलप्रदम् ।
द्रुमांस्तिलं धनं धान्यं शत्रुनाशं यथा शुभम् ॥
फलं पुष्पं सिता दूर्व्वा स्वप्ने लब्धा जयावहाः ।
शङ्खावस्तथा दन्तिनाभा राज्यप्रदायकाः ॥
गौः सवत्सा नवसुता दृष्टा पुत्त्रफलप्रदा ।
पङ्कलोहरणं कूपे व्याधिमोक्षकरं चिरात् ॥
एवं स्वप्नान् शुभान् दृष्ट्वा तथा छिन्देत पाद-
पम् ।
उदङ्मुखः प्राङ्मुखो वा सघृताक्तपशुना ॥
पूर्व्वोत्तरे च पतनं शस्तोऽशब्दोऽव्रणः शुभः ।
अलक्तमादर्श चान्ये अन्यथा तु परित्यजेत् ॥
अष्टाङ्गुलं त्यजेत् मूले अग्रे तत्तु जले क्षिपेत् ।
तथा तमानयेत्तत्र शकटेन वृषैरपि ॥
युवानैर्व्वलसम्पन्नैर्नेयं तत्पुरतः परम् ।
नीयमाना यदा यष्टी समा वा चतुरस्रका ॥
हन्ता वा भङ्गमाधत्ते राज्ञः पुत्त्रं पुरोहितम् ।
आरभङ्गे बलं भिन्द्यान्नाभ्यनाशं क्षयं तथा ॥
अथैस्य अवभङ्गेन शान्तिस्तत्र तु कारयेत् ।
इन्द्रलेच्छनमन्त्रेण जातवेदसमापि वा ॥
तथा नीत्वा शुभे लग्ने पुरस्तादुपवेशयेत् ।
द्वारशोभां पथरथ्या हट्टे हट्टे च कारयेत् ॥
यदा पटहनादाद्य वेश्याशब्दद्विजालयः ।
सङ्कुलैर्वेदशब्दैश्च ता नेया यत्र उच्छ्रयेत् ॥
तत्रस्थाश्चित्रकर्म्मादिनिर्म्मितैस्तान्तु वेष्टयेत् ।
वस्त्रैरङ्गरोमोत्थैः शुभैः शुक्लैर्यथाक्रमम् ॥
नन्दोपनन्दसंज्ञाश्च कुमार्यः प्रथमांशगाः ।
देव्यो जयविजयाख्याः षोडशांशव्यवस्थिताः ॥

अधिके शत्रुजयिनी तथाथेला देवतैर्दृढा ।
ध्वजपरिमाणार्थं सेपरिधि: प्रथमं पिटम् ॥
षोड़शांशविहीनानि कुर्य्याच्छेषाणि बुद्धिमान् ।
रसनां विचित्रवर्णां प्रथमां दद्यात् स्वयम्भूः ॥
सुरक्तां चतुरस्राञ्च विश्वकर्म्मा द्वितीयतः ।
अष्टास्रान्तु स्वयं शक्रो नीलरक्तां प्रदापयेत ॥
कृष्णां यमेन दत्तञ्च अंशुकेन सहस्रिकम् ।
मञ्जिष्ठाजलदाकारं वासुदेवो मस्तरकम् ॥
नीलवर्णञ्च तं दद्यात् स्कन्दो बहुविचित्रितम् ।
वृत्तन्तु दहनो दद्यात् सुवर्णाभं तथाष्टमम् ॥
वैदूर्य्यसदृशमिन्द्रो ग्रैवेयं दापयेद् बुधः ।
चक्राङ्कमङ्कतिन्तु सूर्य्यो विश्वेदेवाः पद्मनिभम् ॥
ऋषयो नियमं दद्युर्नीलं नीलोत्पलाभासम् ।
गुरुणा शुक्रेण ततो विशालं मूर्द्धतो न्यस्तम् ॥
गृहैर्विचित्राणि बहुमातृभिः खानि रूपाणि ।
यदीकेनेव-दत्तन्तु केतोस्तत्तस्य भूषणम् ॥
तदैव तं विजानीयाद्यन्त्रादिभिस्तमुच्छ्रयेत् ।
प्रथमं प्रविशमाना भूमिं यष्टिर्हन्ति राष्ट्रम् ॥
बालानां तालशब्देन देशविघातं समाचष्टे ।
नृपवधकरा विशीर्णा शुभावहा सर्व्वसान्द्रा च ॥
शम्भुसूर्य्ययमशक्रसोमधनदवायवः ।
वह्नीशक्रयिमन्त्राश्च चीतया दधि-चार्च्चिताः ॥
शुक्रस्कन्दगुरुवह्मजापरादि प्रपाठयेत् ।
हुत्वा तु विधिवद्वह्निज्वालां लक्षेत बुद्धिमान् ॥
सुतेजाः सुभगो दीप्तः संहतो रुचिरप्रभः ।
रक्ताशोकसमाकारो रथभेरीस्वनः शुभः ॥
शङ्खदुन्दुभिमेघानां नादाः शस्तास्तु पावके ।
ततः सपादलौहदण्डान् पताकाश्च समुच्छ्रये ॥
अन्याश्च विविधाः शोभाः शक्रकेतुसमुच्छ्रये ।
प्रोष्ठपदे तु अष्टम्यां शुक्लायां शोभने ऋक्षे ॥
आश्विने वाथ शुक्लायां श्रवणेनाथ उच्छ्रयेत् ।
पौरजनलक्षवृन्दैः पटभेरीनिनादतन्
वितानध्वजशोभाढ्यं पताकाभिः समुज्ज्वलम् ।
विप्राशीश्शममन्त्रेण सिंहरवाक्षतेन च ॥
दृढ़मातृकरन्धृस्थं शुभतोरणमाङ्गलम् ।
अविलम्बितमुत्थानमभग्नपिटकं समम् ॥
न द्रुतं वा समुत्थाप्य केतुं याववर्न विभो ।
उच्छ्रितं रक्षयेत्ताश्चः काकोलूककपोतयोः ॥
न समुत्थापनं दद्यादन्येषामपि पक्षिणाम् ।
यन्त्रोद्देशेन त कुर्य्यात् सुखं केतोर्यथाविधि ॥
तथा सुसंस्थितं पूज्यं सुखयन्त्रसुयन्त्रितम् ।
रात्रौ जागरणं कुर्य्यादिन्द्रमन्त्रानुकीर्त्तनम् ॥
पुरोहितः सदैवज्ञः शुभशान्तिरतः सदा ।
कुलपातो नृपं हन्यात् पताका महिषीवधम् ॥
पिटके युवराजस्य सचिवमनुकम्पते ।
राष्ट्रं तोरणपातेन ध्वसे अग्नघयो भवेत् ।
पतिते शक्रदण्डे तु नृपमन्यं समादिशेत् ।
[illegible]गालक उत्थाने, शत्रुभास्कराद्भयम् ।
सुसमे संस्थिते शान्तिर्नृपस्य नगरस्य च ।
यावोच्छ्रितन्तु तिष्ठन्ति तावत् पौराः सदा
हृष्टाः ।
केतोर्निरता यपने सप्तापाद्विप्रकन्याश्च ।
पाते तु तथैव कुर्य्यादुत्थाने यादृशी पूजा ।
रात्रौ शुभकृत् पातनं नो दृष्टं काककपोतैः ॥
याति नृपं सहराष्ट्रं यश्चैव कारयेत् केतुम् ।
नगरे वा पुरे खेटे यद्येवं कुर्व्वते पौराः ॥
पुरे नगरस्य द्वारे वृषसिंहखगोत्थितम् ।
केतु समस्तपौराणां नाशनं जयदं महत् ॥
एवं पूर्व्वं हरिः केतुं प्राप्तवान् हयवाहनात् ।
तथा ब्रह्मसुतेनैव ब्रह्मणः शक्रमागतः ॥
तेन सोमस्य तद्वृत्तं ततो रवेः समागतम् ।
तदाप्रभृति कुर्व्वन्ति नृपा अद्यापि उच्छ्रयम् ।
एवं यः कारयेद्राजा केतुं विजयकारकम् ।
तस्य पृथ्वी वलोपेता सशैला वशगा भवेत् ॥”
इत्याद्ये देवीपुराणे इन्द्रध्वजलक्षणम् २१ अध्यायः ॥

शक्रनन्दनः, पुं, (शक्रस्य नन्दनः ।) अर्ज्जुनः । इति जटाधरः ॥ (इन्द्रपुत्रमात्रमपि ॥ शक्रं नन्दयतीति । नन्दि+ल्युः ।) इन्द्रानन्दकारके, त्रि ॥

शक्रपर्य्यायः, पुं, (शक्रस्य पर्य्यायो नाम यस्य ।) कुटजवृक्षः । इति रत्नमाला ॥ इन्द्रवाचकश्च ॥

शक्रपादपः, पुं, (शक्रस्य पादपः ।) देवदारुवृक्षः । इत्यमरः ॥ कुटजवृक्षः । इति राजनिर्घण्टः ॥

शक्रपुष्पिका, स्त्री, (शक्रपुष्पी+स्वार्थे कन् । अत इत्वम् ।) अग्निशिखावृक्षः । इति रत्नमाला ॥

शक्रपुष्पी, स्त्री, अग्निशिखावृक्षः । इत्यमरः ॥

शक्रबीजं, क्ली, इन्द्रयवः । इति राजनिर्घण्टः ॥

शक्रभवनं, क्ली, (शक्रस्य भवनम् ।) स्वर्गः । इति त्रिकाण्डशेषः ॥

शक्रभित्, [द्] पुं, (शक्रं भिनत्तीति । भिद्+क्विप् ।) इन्द्रजित् । स च रावणपुत्त्रः । इति शब्दरत्नावली ॥

शक्रभूभवा, स्त्री, इन्द्रवारुणी । इति शब्दचन्द्रिका ॥

शक्रमाता, स्त्री, (शक्रस्य मातेव ।) भार्गी । इति राजनिर्घण्टः ॥ इन्द्रजननी च ॥

शक्रमातृका, स्त्री, (शक्रस्य मातृकेव ।) शक्रध्वजाङ्गयष्टिविशेषः । यथा, कालिकापुराणम् ।
“कुमार्य्यः पञ्च कर्त्तव्याः शक्रस्य नृपसत्तम ।
शालमय्यस्तु ताः सर्व्वास्तत्परा: शक्रमातृकाः ॥
केतोः पादप्रमाणेन कार्य्याः शक्रकुमारिकाः ।
मातृकार्द्धप्रमाणा तु यन्त्रं हस्तद्वयं तथा ॥
एवं कृत्वा कुमारीश्च मातृकां केतुमेव च ।
एकादश्यां सिते पक्षे यष्टीनामधिवासनम् ॥”
इति तिथ्यादितत्त्वम् ॥

शक्रमूर्द्धा, [न्] स्त्री, (शक्रस्येव मूर्द्धा यस्य ।) वल्मीकः । इति त्रिकाण्डशेषः ॥

शक्रवल्ली, स्त्री, (शक्रप्रिया वल्ली ।) इन्द्रवारुणी । इति राजनिर्घण्टः ॥

शक्रवाहनः, पुं, (शक्रं वाहयतीति । वह+णिच्+ल्युः ।) मेघः । इति शब्दचन्द्रिका ॥

शक्रशरासनं, क्ली, (शक्रस्य शरासनम् ।) इन्द्रधनुः । इति हलायुधः ॥

शक्रशाखी, [न्] पुं, (शक्रनामकः शाखी ।) कुटजवृक्षः । इति भावप्रकाशः ॥

शक्रशाला, स्त्री, प्रतिश्रयः । इति भूरिप्रयोगः ॥ पुस्तकान्तरे सत्रशाला इति पाठश्च ॥ (शक्रस्य शाला ।) इन्द्रगृहञ्च ॥

शक्रशिरः, [स्] क्ली, (शक्रस्य शिर इव ।) वल्मीकः । इति राजनिर्घण्टः ॥ इन्द्रमस्तकञ्च ॥

शक्रसारथिः, पुं, (शक्रस्य सारथिः ।) मातलिः । इति हलायुधः ॥

शक्रसुतः, पुं, (शक्रस्य सुतः ।) वालिवानरः । इति हलायुधः ॥ इन्द्रपुत्त्रमात्रञ्च ॥

शक्रसुधा, स्त्री, (शक्रस्य सुधेव ।) पालङ्की । इति शब्दचन्द्रिका ॥ कुन्दुरुखोटी इति भाषा ॥

शक्रसृष्टा, स्त्री, (शक्रेण सृष्टा ।) हरीतकी । इति त्रिकाण्डशेषः ॥

शक्राख्यः, पुं, (शक्रस्य आख्या यस्य ।) पेचकः । इति त्रिकाण्डशेषः ॥ इन्द्रनामके, त्रि ॥

शक्राणी, स्त्री, (शक्रस्य पत्नी । ङीष् । आनुक् ।) शची । इति शब्दमाला ॥ यथा, महाभारते । ५ । ११ । २२ ।
“हृष्टस्तनिरशोवाच शक्राणीं भयमोहिताम् ॥”

शक्राशनं, क्ली, (शक्रेण अश्यते इति । अश+ल्युट् ।) भङ्गा । भाङ् इति भाषा । अस्य गुणाः ।
“शक्राशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम् ।
वलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥”
इति राजवल्लभः ॥
अन्यत् विजयाशब्दे द्रष्टव्यम् । इन्द्रभोजनञ्च ॥

शक्राशनः, पुं, (शक्र इति नाम अश्नुते व्याप्नोतीति । अश+ल्युः ।) कुटजवृक्षः । इति शब्दचन्द्रिका ॥

शक्राह्वः, पुं, (शक्रस्य आह्वा यस्य ।) इन्द्रयवः । इति राजनिर्घण्टः ॥ इन्द्रनामके, त्रि ॥

शक्रिः, पुं, (शक+बाहुलकात् क्रिन् ।) मेघः । वज्रम् । हस्ती । पर्व्वतः । इति संक्षिप्तसारोणादिवृत्तिः ॥

शक्रोत्थानं, क्ली, (शक्रस्य शक्रध्वजस्य उत्थानम् ।) शक्रध्वजोत्सवः । अस्य विधिर्लिख्यते ।
और्व्व उवाच ।
“अथातः शृणु राजेन्द्र शक्रोत्थानध्वजोत्सवम् ।
यत्कृत्वा नृपतिर्याति नो कदाचित् पराभवम् ॥
रवौ हरिस्थे द्वादश्यां श्रवणे सितपक्षके ।
आराधयेन्नृपः सम्यक् सर्व्वविघ्नोपशान्तये ॥
राजोपरिचरो नाम वसुनामापरस्तु यः ।
नृपस्तेनायमतुलो यज्ञः प्रावर्त्तितः पुरा ॥
प्राविट्काले च नभसि द्वादश्यामसितेतरे ।
पुरोहितो बहुविधैर्वाद्यैस्तूर्य्यैः समन्वितः ॥
प्रथमं शक्रकेत्वर्थे वृक्षमामन्त्र्य वर्द्धयेत् ।
सांवत्सरो वार्द्धकिश्च स्नतकौतुकमङ्गलः ॥
उद्याने देवतागारे श्मशाने मार्गमध्यतः ।
ये जातास्तरवस्तांस्तु वर्ज्जयेद्वासवध्वजे ॥
बहुवल्लीयुतं शुष्कं बहुकण्टकसंयुतम् ।

शिलाभवं, क्ली, ( शिलाया भवः उत्पत्तिर्यस्य । ) शैलेयम् । इति जटाधरः ॥

शिलाभेदः, पुं, (शिलां भिनत्तीति । भिद् + अच् ।), पाषाणभेदी वृक्षः । इति रत्नमाला ॥ प्रस्तरभेदकाख्ये, क्ली ॥

शिलारम्भा, स्त्री, ( शिलेव दृढा रम्भा । ) काष्ठकदली । इति राजनिर्घण्टः ॥

शिलावल्का, स्त्री, ( शिलेव कठिनो वल्को यस्याः ।) ओषधद्रव्यविशेषः । शिलावाक् इति हिन्दी भाषा । तत्पर्य्यायः । शिलजा २ शैलवल्कला ३ वल्कला ४ शैलगर्भाह्वा ५ शिलात्वक् ५ श्वेता ७ । अस्या गुणाः । हिमत्वम् । स्वादुत्वम् । शुक्रमेहमूत्ररोधाश्मरीशूलज्वरपित्तनाशित्वञ्च । इति राजनिर्घण्टः ॥

शिलाव्याधिः, पुं, (शिलाया व्याधिरिव । ) शिलाजतु । इति त्रिकाण्डशेषः ॥

शिलासनं, क्ली, (शिला आसनं यस्य ।) शैलेयम् । इति शब्दरत्नावली ॥ प्रस्तरनिर्म्मितासनञ्च ॥

शिलासारं, क्ली, ( शिलावत् सारो यत्र । ) लौहम् । इति हेमचन्द्रः ॥

शिलाह्वं, क्ली, ( शिला इत्याह्वा यस्य । ) शिलाजतु । इति भावप्रकाशः ॥

शिलिः, पुं, भूर्जपत्रवृक्षः । इति शब्दमाला ॥

शिलिः, स्त्री, द्वाराधःस्थितकाष्ठम् । इति शब्दरत्नावली ॥ गोबराट् इति भाषा ॥

शिलिन्दः, पुं, मत्स्यविशेषः । यथा,—

"शिलिन्दः श्लेष्मलो बल्यो विपाके मधुरो गुरुः ।
आमवातकरो हृद्यो वातपित्तहरो मतः ॥"
इति राजवल्लभः ॥

शिली, स्त्री, ( शिलि + कृदिकारादिति ङीष् । ) द्वाराधःस्थितकाष्ठम् । ) इति शब्दरत्नावली ॥ गण्डूपदी । स्तम्भशीर्षम् । इति मेदिनी ॥

शिलीन्ध्रं, क्ली, कदलीपुष्पम् । ( यथा, माघे । ६ । ३९ ।

"नवकदम्बरजोऽरुणिताम्बरै-
रधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः ॥")

करका । इति मेदिनी ॥ त्रिपुटा । इति विश्वः ॥

शिलीन्ध्रः, पुं, वृक्षविशेषः । इति मेदिनी ॥ मत्स्यविशेषः । स तु चित्रफलकमत्स्यः । इति जटाधरः ॥

शिलीन्ध्रकं, क्ली, गोमयच्छत्रिका । यथा,—

"गोमयच्छत्रिकामाहुर्दिलीरञ्च शिलीन्ध्रकम् ।"
इति हारावली ॥

शिलीन्ध्री, स्त्री, विहङ्गीभेदः । गण्डूपदी । मृत्तिका । इति मेदिनी ॥

शिलीपदः, पुं, ( शिलेव स्थूलं पदमस्मात् ।) पादरोगविशेषः । गोद इति भाषा । तत्पर्य्यायः । पदवल्मीकः २ श्लीपदः ३ । इति शब्दरत्नावली ॥ पादवल्मीकः २ । इति हेमचन्द्रः ॥ श्लीपदस्य विप्रकृष्टं निदानमाह ।

"पुराणोदकभूयिष्ठाः सर्व्वर्तुषु च शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥"

विशेषत इति वचनेनान्यत्रापि श्लीपदानि भवन्ति इति बोध्यते ॥*॥ सामान्यं लक्षणमाह ।

"यः सज्वरो वंक्षणजो भृशार्त्तिः
शोथो नृणां पादगतः क्रमेण ।
तत् श्लीपदं स्यात् करकर्णनेत्र-
शिश्नौष्ठनासास्वपि केचिदाहुः ॥"

तत्त्रिविधम् । वातिकं पैत्तिकं श्लैष्मिकञ्चेति । तेषां लक्षणमाह ।

"वातजं कृष्णरूक्षञ्च स्फुटितं तीव्रवेदनम् ।
अनिमित्तरुजञ्चास्य बहुशो ज्वर एव च ॥*॥
पित्तजं पीतसङ्काशं दाहज्वरयुतं भृशम् ।*।
श्लैष्मिकन्तु भवेत् स्निग्धं तथा पाण्डु गुरु स्थिरम् ॥
त्रीण्यप्येतानि जानीयात् श्लीपदानि कफो-
च्छ्रयात् ।
गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात् ॥"

असाध्यमाह ।

"वल्मीकमिव संजातं कण्टकैरुपचीयते ।
सर्व्वात्मकं महत्तच्च वर्जनीयं विशेषतः ॥
यत् श्लैष्मलाहारविहारजातं
जातं तथा भूरिकफस्य पुंसः ।
सास्रावमत्युन्नतसर्व्वलिङ्गं
सकण्डकं वापि विवर्ज्जनीयम् ॥"

अस्य चिकित्सा ।

"लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥
सिद्धार्थशोभाञ्जनदेवदारु-
विश्वौषधैर्मूत्रयुतैः प्रलिम्पेत् ।
पुनर्नवा नागरसर्षपाणां
कल्केन वा काञ्जिकमिश्रितेन ॥"

श्लीपदमिति शेषः ।

"धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥
असाध्यमपि यात्यन्तं श्लीपदं चिरकालजम् ।
मूलेन सहचरायाः तालमिश्रेण लेपनात् ॥"

तालस्य फलरसो ग्राह्यः ।

"सप्तलास्थलपत्राणां कल्कं तप्तेन वारिणा ।
संसृष्टं लवणोपेतं सेवितं श्लीपदं हरेत् ॥
शाखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत् ।
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये ॥
रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥
वर्षाभूनिष्फलाचूर्णं पिप्पल्या सह योजितम् ।
सर्व्वोत्थं श्लीपदं निद्राचिरोत्थं श्लीपदं जयेत् ॥
गन्धर्व्वतैलसिद्धां हरीतकीं गोऽम्बुना पिबति ।
श्लीपदविबन्धयुक्तो भवत्यसौ सप्तरात्रेण ॥"

गन्धर्व्वतैलं एरण्डतैलम् । गोऽम्बुना गोमूत्रेण । इति भावप्रकाशः ॥

शिलीमुखः, पुं, ( शिलीव मुखं यस्य । ) भ्रमरः । ( यथा, रघुः । ६ । ५७ ।

"कटेषु करिणां पेतुः पुन्नागेभ्यः शिली-
मुखाः ॥")

बाणः । इत्यमरः ॥ ( यथा, महाभारते । ४ । ४० । ११ ।

"कस्यायं शायको दीर्घः शिलीपृष्ठः शिली-
मुखः ॥")

मूढम् । जड़ीभूतः । इति शब्दरत्नावली ॥

शिलेयं, क्ली, ( शिलायां भवम् । शिला + ढः । ) शैलजम् । इति शब्दरत्नावली ॥ शिलासम्बन्धिनि, त्रि ॥ ( शिलेव + "शिलाया ढः ।" ५ । ३ । १०२ । इति ढः । शिलासदृशे च त्रि ॥ यथा, शिलेयं दधि । इति काशिका ॥ )

शिलोच्चयः, पुं, (शिलाया उच्चयो यत्र ।) पर्व्वतः । इत्यमरः ॥ ( यथा, रघुवंशे । २ । २७ ।

"न पादपोन्मूलनशक्तिरंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥")

शिलोञ्छः, पुं, उञ्छशिलम् । उपात्तशस्यात् क्षेत्रात् शेषावचयनम् । उञ्छेन परिचक्षादानवद्ग्रहणेन शिल्यते सञ्चीयते उञ्छशिलम् । उछि शुञ्छे शिल शुञ्छे कृन्नोरित्युक्ते कृ ग ञ्जेति इगुपधत्वात् कः उञ्छशिलं संघातविगृहीतं विपर्य्यस्तम् ।

"शक्यं न चेदुञ्छशिलेन वृत्तिः
फलेन मूलेन च वारिणा च ।"

इति समाहारद्वन्द्वे । उञ्छं शिलञ्च ।

"उञ्छमेतच्च यच्चान्यत् तत् परिग्रहणं त्वृतम् ।"

इति निगमाभिधाने क्लीवं पुमानुञ्छ ऋतं शिलं इति वोपालिते पुंस्युञ्छः ।

"रघुकाराहृतसारे
परिणतवाक् कज्ञकेदारे ।
भवभूतिहतशिलोञ्छे
तत्तलपतितं वयं चिनुमः ॥"

इति गोवर्द्धनः । केचिदुञ्छशिलयोर्भेदमाहुः । प्रतिग्रहात् शिलं श्रेयस्ततोऽप्युञ्छः प्रशस्यते इति । तत्र शाल्यादेर्निपातितपरित्यक्तमञ्जरीणां आदानं शिलम् । शिलं धान्यमञ्जरीसंग्रह इति स्वामी च । एकैकशः कपोतवद्धान्यकणोद्ग्रहणमुञ्छः । तदुक्तं उञ्छो धान्यकणोच्चयः इति । शिलं ताम्रव्यादि दन्त्यादि च । इत्यमरटीकायां भरतः ॥ (यथा, मनौ । ७ । ३३ ।

"एवं वृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।
विस्तीर्य्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥")

शिलोत्थं, क्ली, ( शिलाया उत्तिष्ठतीति । उत् + स्था + कः । ) शैलेयम् । इति राजनिर्घण्टः ॥

शिलोद्भवं, क्ली, ( शिलाया उद्भवो यस्य । ) शैलेयम् । इति राजनिर्घण्टः ॥ चन्दनविशेषः । यथा,—

"सुशीतलं चन्दनं यत् तैलपर्णिकमुच्यते ।
उभौ च तस्य पर्य्यायौ सोमयोनि शिलोद्भवम् ॥"
इति शब्दचन्द्रिका ॥

शिलौकाः, [स्] पुं, ( शिला पर्व्वतः ओको वासस्थानं यस्य । ) गरुडः । इति त्रिकाण्डशेषः ॥

शिल्पं, क्ली, ( शील समाधौ + "खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः ।" उणा० । ३ । २८ । इति

ईशानवाह्ये चरकी द्वितीये
विदारिका पूतनिका तृतीये ।
पापाभिधा मारुतकोणके तु
पूज्याः सुरा उक्तविधानतस्तु ॥ * ॥
ब्रह्मा वेदपदस्तु तेन समका देवार्य्यमाद्यास्तमी
कोणेऽष्टौ द्विपदास्तथाष्टमरुतः कोणेऽर्द्धभागाद्
बहिः ।
शेषा एकपदाः सुरास्तु कथिता वेदत्तुंके-६४
ऽथो नव
ब्रह्मा षट्पदिनोऽर्य्यमादिविबुधा ईशादयस्त्वे-
कशः ॥
ब्रह्मा कलांशो वसुनोऽर्य्यमाद्याः
कोणेऽष्ट वाह्येऽपि च सार्द्धभागाः ।
विधात्रकोणे द्विपदास्तथाष्टौ
शेषाः सुरा एकपदाः शतांशे ॥*॥
ब्रह्माजिनांश२४ उदितः शिवतोऽर्य्यमाद्याः
कोणेषु सार्द्धपदतोऽपि तथैव चाष्टौ ।
शेषा द्विभागसमका रविभागकोऽयं
पूज्यो रथाश्वगजवाहनकेऽश्रुयन्ते ॥
यन्ते त्रयोदशपदैरपि पूजनीय-
स्तन् पञ्चविंशतिरजो दशतोऽर्य्यमाद्याः ।
कोणेऽष्टयोऽमरगणा वह्निके कलांशा
भद्रेऽधिकं रविविभागपरे द्विभागाः ॥*॥
द्वात्रिंशत् कमलासनोऽर्य्यमसुखाः स्युः सूर्य्य-
भागा क्रमात्
कोणेऽन्येऽष्टसुरा द्विभागसहिता वाह्येषु
सार्द्धांशकाः ।
अष्टौ रामपदाः पुनर्द्विपदकाः षड्भागिनोऽष्टौ
सुराः
क्षेत्रे पञ्चचन्द्रभागसहिते १८६ स्याद्देवतानां
क्रमः ॥ * ॥
वेदांशो विधिरर्य्यमप्रभृतयस्त्र्यंशा नवस्वष्टके
कोणेऽन्येऽष्टपदार्द्धगाः परसुराः षड्भागहीने
पदे ।
वास्तोर्नन्दयुगांश ४८ एवमधुनाष्टांशैश्चतुः-
षष्टिके
सन्धिः सूत्रमितान् सुधीः परिहरेद्भित्तीस्तुला-
स्तम्भकान् ॥ * ॥
रेखाद्वयं कोणगतं विधेय-
मंशान्तरेणैव तु कर्णसूत्रात् ।
यदष्टकैः कथितं तु पदं
सर्व्वोद्भवान् स्वामिधनप्रणाशः ॥
प्रोक्तं चतुर्विंशतिलाङ्गुलं यत्
पादार्द्धगं हानिकरं प्रजायाः ।
षड्भिस्तु सूत्रैर्मरणाय यच्च
कोणे त्रिशूलञ्च रिपोर्भयाय ॥
परीक्ष्य भूमीमरसैश्चयेत्तां
सुवर्णयोग्येन ततो विलिख्य ।
रेखा सुवर्णेन मणिप्रवालैः
पिष्टाक्षतैर्वापि पुनरूद्धे ।
द्वात्रिंशदंशाः एकत्र च दैर्घ्ये
कोदं६ रम्यां जिनवंशर२४भागाः ।
शततुपदानां कथितं सहस्रं
क्षेत्रस्य सर्व्वेषाममेव वास्तोः ॥ * ॥
मध्ये ब्रह्मा पूजनीयः शतांशै-
श्चत्वारिंशद्भिः पदैर्ब्राह्मवीथी ।
प्रोक्ता देवा अर्य्यमाद्या अशीत्या
मध्ये कोणेऽष्टौ शतं चाष्टषष्ट्या ॥
कोणेऽष्टयो नन्दपदैः सुराश्च
शेषाश्च वाह्ये वसुभागिनश्च ।
वीथी च वाह्ये रविभागयुक्तं
शतं पदानां कथितं मुनीन्द्रैः ॥
दुर्गप्रतिष्ठाविषये निवेशे
तथा महार्चासु च कोटिहोमे ।
मेरौ च राष्ट्रेष्वपि ज्येष्ठलिङ्गे
वास्तुः सहस्रेण पदैः प्रपूज्यः ॥*॥
त्रिमेखलं शङ्करदिग्विभागे
कुण्डं प्रकुर्य्यात् करतो युगास्रम् ।
होमं सुराणां प्रतमष्टयुक्तं
प्रत्येकमष्टाधिकविंशतिं वा ॥
मध्वाज्यदुग्धैर्दधिशर्कराभ्यां
छागैस्तिलैर्व्रीहियवैर्नवान्नैः ।
पलाशदूर्व्वाङ्कुरदुग्धवृक्षै-
र्होमं वदन्ते सुरपूजनञ्च ॥
ईशे घृताक्तमपरे सहताक्तञ्च
दद्याज्जयाय हरिताम्बरमेव कूर्म्मम् ।
रत्नानि पिष्टकमयं कुलिशं सुरेन्द्रे
धूम्रं वितानमुदितञ्च दिवाकरस्य ॥
गोधूमयुक्तं घृतमेव सत्ये
मत्स्यान् भृशे शष्कुलिमन्तरीक्षे ।
वह्नौ सुचं पूष्णि तथैव लाजा
दद्याद्धर्म्मे चणकौदनञ्च ॥
सच्चन्नञ्च गृहक्षताय यमतो मांसौदनं दापयेत्
गन्धर्व्वे शतपत्रमोदनयुतं भृङ्गेऽर्णजिह्वां तथा ।
प्रोक्ता नीलजवा मृगाय पितृतो देयाश्च सम्यो-
दकाः
पैष्टं कृष्णबलिं तथैव विधिवद्दद्याच्च दौवारिके ॥
सुग्रीवाय च पूपका गणवरे श्वेतप्रसूनं पयः
पद्मं वारुणके सुराप्यसुरके तैलं तिलाः शोषके ।
पापाख्येऽपि च पक्कमांसमुदितं रोगाय सर्व्वौ-
षधीः
गोक्षीरं फणिने च मुख्यविबुधे श्रीखण्डभक्ते
तथा ॥
भल्लाटाय सुवर्णकं धनपतौ मण्डाज्यदुग्धं तथा
शक्तून् पर्व्वतकेऽदितेस्तु लपिकां दद्याद्दितौ
पूरिकाम् ।
सक्षीरं दधिकं क्रमेण विहितं त्वापापवत्से तथा-
प्यर्य्यमृगेऽरुणचन्दनञ्च पयसा युक्ता तथा
शर्करा ।
सावित्रेऽपि च लड्डुकाश्च सवितुः पूपा गुड़ा
सद्घृता
देयं चाथ विवस्वते घृतयुतं दुग्धं तथा मोदकाः ।
इन्द्राख्ये कुसुमस्रगिन्द्रजयके देयं तथा चम्पकं
मैत्रे दग्धघृतञ्च गुग्गुलुयुतो गन्धस्तथा रुद्रके ।
तत्रसिद्धमन्नन्त्वपि रुद्रदासे
सद्रत्नमालां पृथिवीधराय ।
पयस्वलां गामक्षतं घटञ्च
दद्याद्विधौ स्वर्णमतोऽखिलेभ्यः ॥
सुराक्षि मांसं विहितं चरक्यै
तथैव पीतौदनको विदार्य्यै ।
रक्तौदनैः पूतनिकार्च्चनीया
मत्स्यासवेनापि तथैव पापा ॥
मांसं पक्कं पिलिपिञ्जाय तज्जृम्भाये विहितं
सद्यः ।
स्कन्दाय तम्रद्दिरायुक्तं चार्य्यमृणे दिशि
पूर्व्वाद्यै ॥
यः पूजयेद्वास्तुममन्त्रयुक्ता
न तस्य दुःखं भवतीह किञ्चित् ।
जीवत्यसौ वर्षशतं सुखेन
स्वर्गे नरस्तिष्ठति कल्पमेकम् ॥”
इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभे वास्तुलक्षणम् ०[अध्यायः ॥ * ॥
“आयर्क्षव्ययतारकांशकविधुं राशिं मुखाद्यं
तथा
धान्यं सौख्यशोऽभिवृद्धिरधिका यस्मादतः
कथ्यते ।
आयास्तु ध्वजधूमसिंहशुनका गोरासभेभाः
क्रमात्
ध्वाङ्क्षस्त्वष्टम आयमेषु विषमाः श्रेष्ठाः सुराणां
गृहे ॥
मानं देवगृहादिभूपसदने शास्त्रोक्तहस्तेन तत्
गेहे कर्म्मकरस्य नाथकरतः शास्त्रेण देयं गृहे ।
अथो दण्डकराङ्गुलादिमपि ते हस्ताङ्गुलैरंशतः
क्षेत्रस्याप्यनुमानतोऽपि नगरे दण्डेन मानं पुरे ॥
आयः कल्प्यो हस्तमेयैः करैश्च
क्षेत्रे मात्रानिर्म्मिते मात्रकाभिः ।
मध्ये पर्य्यङ्कासने मन्दिरे च
देवागारे मण्डपे भित्तिवाह्ये ॥
छत्रे देवगृहे द्विजस्य भवने स्याद्वेदिकायां जले
विस्तारोच्छ्रयवस्त्रभूषणमठागारेषु शस्तो ध्वजः ।
धूमो वह्न्युपजीविनामपि गृहे कुण्डे च होमो-
द्भवे
सिंहद्वारनृपालयेऽस्त्रनिचये सिंहस्य सिंहा-
सने ॥
चण्डाले शुनको विशान्तु वृषभो हर्म्ये दयानां
हितो
वाणिज्ये धनभोजनस्य भवनेऽथो वाद्यगेहे
खरः ।
वादित्रे खरजीविनामपि गृहे शौद्रे गजो
योषितो
याने स्त्रीगृहवाहने च शयने शस्तो गृहे हस्ति-
नाम् ॥
ध्वाङ्क्षः शिल्पिनपस्विनां द्विजकरक्षेत्रा शुभं
नामवत्
ध्वाङ्क्षः काकमुखो बिड़ालवदनो धूमो ध्वजो
मानुषः ।

आयामे वसुपादसार्द्धवसुतो भागः प्रशस्तोऽधिक-
स्त्वेकैकश्च चतुर्विधं निगदितं कार्य्यं समं कर्षयोः ॥

षट्त्रिंशतः षट् क्रमतो विरुद्धा
देवे पुरे चत्वरके क्रमेण ।
यदृच्छया मानमुशन्ति केचित्
प्राकारकोष्ठस्य च भित्तिकायाः ॥४॥
पूर्व्वापरास्याः पुरसम्मुखाश्च
देवाः शुभा नोत्तरदक्षिणाश्च ।
भङ्गं पुरस्यापि पराङ्मुखास्ते
कुर्व्वन्ति धात्रर्कजनार्द्दनेशाः ॥

ब्रह्मा विष्णुशिवेन्द्रभास्करगुहाः पूर्व्वापरास्याः शुभाः
प्रोक्तौ सर्व्वदिशासखौ शिवजिनौ विष्णुर्विधाता तथा ।
चामुण्डा ग्रहमातरो धनपतिर्दिंमातुरो भैरवो
देवा दक्षिणदिङ्मुखाः कपिवरो नैर्ऋत्यवक्त्रो भवेत् ॥

मार्गाः सप्तदशाकुपथश्शिखिनो युग्मं पुरात् खर्व्वटे
मार्गाः षोडश सूर्य्यविंशतिकराः कार्य्यास्त्रिधा विस्तरे ।
प्राकारोदयविंशहस्तमभितो द्वाभ्यां विहीनोऽधिको
यामार्द्धेन तदूर्द्धतश्च कपिशीर्षाण्यष्टमात्रान्तरम् ॥

प्राकारेऽपि च कोष्ठका दशकराः सूर्य्येन्द्रहस्तास्तथा
प्रोक्तास्तेन समैव कोणसहिता विद्याधरी मध्यमा ।
तस्या वाथ सुवृत्तके च विविधं युद्धासनं कारयेत्
प्राकारोदयतो विधाय परिखाविस्तार उक्तो बुधैः ॥

विद्याधरीकोष्ठकयोश्च मध्ये
बाहुप्रमाणं शरदानहस्तम् ।
पञ्चाधिकं पञ्चकरेण हीन-
मिति त्रिधा वास्तुमतो हितश्च ॥५॥
दुर्गोदयं नन्दकरप्रमाणं
तिथ्या समं सप्तदशैव केचित् ।
एकोनविंशं पृथुलं नयाणां
दिक्कालसूर्य्याष्टकरा वदन्ति ॥

ताम्बूलं फलदन्तगन्धकुसुमं मुक्तादिकं यद्भवेत्
राजद्वारसुराग्रतो हि सुधिया कार्य्यं पुरे सर्व्वतः ।
प्राग्विप्राश्च नृपा हि दक्षिणदिशि स्युः सौम्यतः शूद्रकाः
कर्त्तव्याः पुरमध्यतोऽपि वणिजो वैश्या विचित्रैर्गृहैः ॥

ईशे रङ्गकराः फणीन्द्ररजका वह्नौ च तन्त्रोपिनः
प्रोक्ता वन्यजचर्म्मकारवरटाः स्युः शौण्डिका राक्षसे ।
पण्यस्त्रीनिर्ऋतौ च मारुतयुते लोके न्यसेल्लुब्धकान्
वापीकूपतडागकुण्डमखिलं तोयं तथा वारुणे ॥

सिंहद्वारचतुष्टयस्य खटकोद्वाराणि चाष्टौ तथा
कर्त्तव्यानि दृढार्गलानि रुचिरैः कापाटकैः सुदृढैः ।
कीर्त्तिस्तम्भगवाक्षयामरगृहैर्हट्टैः सुधानिर्मितै-
र्हर्म्यैरश्वोपवनैर्जलाश्रययुतैः कार्य्यं पुरं शोभनम् ॥"

इति नगरप्रमाणम् ॥ ६ ॥

"यन्त्राः पुराणामथ रक्षणाय
संग्रामवह्न्यम्बुसमीरणाख्याः ।
विनिर्म्मितास्ते जयदा नृपाणां
भवन्ति पूज्याः सुरया च मांसैः ॥

हस्ता अष्ट च भैरवो नरकरश्चान्द्रो दशाष्टौ भवे-
दुद्रो भीमगजोऽपि भास्करकरैर्युग्मस्तु विश्वैः शिखी ।
प्रोक्तोऽसौ यमदण्ड एव सोमभित्तिर्या महाभैरवो
षष्टौ शङ्करनिर्म्मिताश्च समरे देवासुरे भैरवे ॥

यन्ते चाष्टकरेऽष्टहस्तफणिनीसूर्य्याङ्गुला विस्तरे
स्तम्भा मर्कटिका च पञ्चरमतः षट्त्रिंशहस्ता क्रमात् ।
यष्टा पृष्ठविभागतोऽपि रदनैस्तुल्योऽष्टमात्राङ्गुलैः
प्रोक्ता कुण्डलवल्लयौ च वहितो मध्यादशीत्यङ्गुलैः ॥

यष्टा दृढ़ा मर्कटिका विदध्या-
छीदस्य कीलेन च चर्म्मणापि ।
यन्त्रं प्रकुर्य्याद्दृढ़काष्ठकञ्च
तस्मानया ज्योतिकया समेनम् ॥
कराङ्गुलैः पञ्जरकस्य दैर्घ्यं
केषां मतं हस्तमिते च यन्त्रे ।
वाटी कुली वह्निजलानिलाख्या-
स्ते तच्छास्त्रैः परिकल्पनीयाः ॥"

इति यन्त्राष्टकप्रमाणानि ॥ ७ ॥

"नीराश्रयं पुण्यवतां विधेयं
मध्ये पुरस्यापि तथैव वास्त्रे ।
वाप्यस्ततोऽपि तथैव कूपा-
श्चत्वारि कुण्डानि च षट् तड़ागाः ॥८॥

कूपाः श्रीमुखवैजया च तदनु प्रान्तस्तथा दुन्दुभि-
स्तस्मादेव मनोहरश्च परतः प्रोक्तस्तु चूड़ामणिः ।
दिग्भद्रो जयनन्दशङ्करमतो वेदादिहस्तैर्मिता
विश्रान्तैः क्रमवर्द्धितैश्च कथिता वेदादयः कूपिका ॥९॥

वापी च नन्दैकमुखा त्रिकूटा
षट्कूटिका दुग्मदुखा च भद्रा ।
जया त्रिवक्त्रा नवकूटयुक्ता-
स्त्वर्कैस्तु कूटैर्विजया मता सा ॥१०॥
सरोऽम्बुचन्द्रश्च महासरश्च
वृत्तं चतुष्कोणकमेव भद्रम् ।
भद्रैः सुभद्रं परिघैकयुग्मं
वक्रस्थलैकद्वयमेव यस्मिन् ॥
ज्येष्ठं मितं दण्डसहस्रकैस्तु
मध्यं तदर्द्धेन ततः कनिष्ठम् ।
ज्येष्ठं करैः पञ्चशतानि दैर्घ्ये-
स्तदर्द्धमध्यं तु ततः कनिष्ठम् ॥११॥
भद्राख्यकुण्डं चतुरस्रकञ्च
सुभद्रकं भद्रयुतं द्वितीयम् ।
नन्दाख्यकं स्यात् प्रतिभद्रयुक्तं
मध्ये सुभद्रं परिघं चतुर्थम् ॥
कराष्टतो हस्तशतं प्रमाणं
द्वारैश्चतुर्भिः सहितानि कुर्य्यात्
मध्ये गवाक्षश्च दिशो विभागे
कोणे चतुष्काण्यपि मण्डपाला ॥१२॥

गङ्गाद्या रवयो हरेश्च दशकं रुद्रा दशैकाधिका
दुर्गा भैरवमातृका गणपतिर्वह्निस्त्रिकं नन्दिका ।
दुर्व्वासा मुनिनारदस्तु सकला द्वारावती लौकिका
लोकाः पञ्च पितामहादिविबुधाः स्युर्मध्यभित्तौ सदा ॥

तस्योर्द्धतः श्रीधरमाण्डकस्य
संदर्शनात् पूर्व्वफलञ्च काश्याः ।
स्नानाच्च गङ्गाश्रवनस्य पुण्यं
शतं भवेच्चेद्विधिवद्विधिज्ञैः ॥
विधारितं जीवनमेव येन
तन्नोपदेशेन समं पृथिव्याम् ।
स वह्निसंख्यं च सहस्रवर्षं
स्वर्लोकसौख्यान्यखिलानि भुङ्क्ते ॥

ग्रामे वाथ पुरे नरेन्द्रभवने तत्षोड़शांशं भवेत
मध्यात् पश्चिमदिक्समाश्रितमिदं दुर्गं भवेन्नृपप्रभात् ।
द्वारं दक्षिणवामतश्च पुरतः कार्य्यास्तथास्त्वराः
सर्व्वं वास्तुगृहादिवासरचना भूपेच्छया कारयेत् ।"

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे प्राकारयन्त्रवापीकूपतड़ागलक्षणम् ४ अध्यायः ॥ ४ ॥

"अथो नृपाणां भवनानि वक्ष्ये
त्रिकातपत्रावनिपालकस्य ।
शतञ्च हस्ताष्टसमन्वितञ्च
व्यासे गृहं चोत्तममेव तस्य ॥
ये द्वापरे भूमिभुजो बभूवु-
स्तेषां गृहं हस्तशतं द्विहीनम् ।
तत्त्वांशभूमीश्वरको नृपाय-
स्त्वष्टाधिकाशीतिकरं गृहं स्यात् ॥
ग्रामैकलक्षद्वयमस्ति यस्य
प्रोक्तो महामण्डलिको नरेशः ।

कार्यं शौकरियोयुतं न हि शुभं युक्तौ च पूर्व्वा-
परम् ॥

सामान्यतः सन्ततशान्तिदञ्च
स्याद्वर्द्धमानं त्वथ कुक्कुटाख्यम् ।
इत्यादितो नाम चतुष्टयञ्च
इम्मीरं द्विशालं प्रथमं तथैव ॥
यत् स्वस्तिकं तद्भद्दारमध्ये-
ऽलिन्दत्रयाग्रे कथितं द्विशालम् ।
हंसाख्यकं स्यादथ वर्द्धमानं
कीर्त्तिविनाशं भवनं चतुर्थम् ॥
अलिन्दयुग्मं पुरतो विदध्यात्
षड्दारु मध्येऽपि च शान्तसंज्ञम् ।
तस्मादृहद्दे हर्षणवैपुले च
तथा चतुर्थं कथितं करालम् ॥
तस्मिन् गृहे दक्षिणतो ह्यलिन्दे
वित्तञ्च वित्तं धनकालदण्डे ।
वामे पुनर्व्वन्धुदपुत्रदं स्यात्
धर्म्मस्तु तस्मिन्नपि कालचक्रम् ॥
लघुश्च पश्चात् पुरतोऽपि युग्मं
स्याद्दक्षिणैको रसदारुमध्ये ।
तत्रैपुरं सुन्दरमेव नीलं
स्यात् कौटिलञ्चैव यथा क्रमेण ॥
प्रदक्षिणैकः पुरतोऽपि युग्मं
षट्कं गृहान्तः किल शाम्बदाख्यम् ।
ततो द्वितीयं खलु शास्त्रदं स्या-
च्छीलं तथा कोटरमेव संज्ञम् ॥
सौम्यं गृहं मण्डपसंयुतञ्च
तत्तुल्यरूपं विबुधैर्व्विधेयम् ।
सुभद्रमस्मादपि वर्द्धमानं
कृत्वा सर्व्वमशुभं चतुर्थम् ॥
मुखे त्रयं दक्षिणपार्श्वमेकः
षड्दारुकं श्रीधरनामधेयम् ।
प्रोक्ते गृहे कामदपुष्टिदे च
चतुर्थकं कीर्त्तिविनाशमेव ॥
वामे तथा दक्षिणपार्श्वमेको
युग्मं मुखे मण्डपमग्रतश्च ।
श्रीभूषणं श्रीवसनं ततश्च
श्रीशोभकीर्त्तिध्वजमेव तद्वत् ॥
एकोऽपरे दक्षिणवामतश्च
सुमध्यगं श्रीधरयुग्मपूर्व्वम् ।
मनोहरं स्यात्तदनन्तरञ्च
सर्व्वाङ्गयुक्तं कुपितश्च नाम्ना ।
दत्तं मुखे मण्डपमेव चाग्रे
युग्मं तथा दक्षिणतोऽन्तभित्तिः ।
एकं तु वामे सदाद्युतञ्च
युतेषु एवं कलशाख्यं स्यात् ॥
अलिन्दके पश्चिमभागतो द्वौ
कुर्य्यात् द्विशालं वहिनिर्वाणम् ।
मत् पुरेऽपि कौमुदमानकानन्द-
मङ्गलवर्त्तकं क्रमतो विधेयम् ॥
लघुत्रिकं पूर्व्वदिशाविभागे
एको भवेद्दक्षिणवामपश्चात् ।

महान्तमेतन्महितञ्च दत्तं
कुलक्षयं मण्डपसंयुतं स्यात् ॥
स्तम्भद्वयं दिक्त्रितये विभागे
मुखे त्रिकं मण्डपमग्रतश्च ।
प्रतापवर्द्धन्यमिदञ्च दिव्यं
सुखाधिकं सौख्यहरं चतुर्थम् ॥
तस्यैव रूपं रसदारुयुग्मं
पुनश्चलिन्दोऽग्रगतस्ततश्च ।
स्यात् सिंहनादं त्वथ हस्तियानं
ज्ञेयं तथा कण्टकमेतदन्त्यम् ॥
शान्तादिगेहानि च षोडशैव
द्विशालकानीह यथाक्रमेण ।
नामानि चत्वार्य्यपि रूपमेकं
छन्दादिभेदैः क्रमतो विधेयम् ॥”

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राज-
वल्लभे एकद्विशालगृहलक्षणं ६ अध्यायः ॥*॥

“द्विशालगेहानि तु षोडशैव
वास्तूदधेः सारतरं पुनश्च ।
वक्ष्याम्यलिन्दोऽपि यतो लघुश्च
द्वौ निन्दकाख्यौ कथितावलिन्दौ ॥
सर्व्वं द्विशालं लघुरस्य वामे
मुखे त्रिकं दक्षिणतस्तथैकः ।
मुखे तथा वाखवमेव गेहं
वामेऽपसव्ये लघुरेक एव ॥
प्रासादसंज्ञं मुखतस्त्रयञ्चेत्
प्रदक्षिणं तिन्दुकवेष्टितं स्यात् ।
अलिन्दयुक्तं विमलं द्विशालं
तद्दीर्घवर्भं सह मण्डपेन ॥
अथ द्विशालेषु समस्तकेषु
मध्ये विदध्याद्रसदारु चैकम् ।
तदा भवेद्भास्करमग्रयुग्म-
मेको लघुर्दक्षिणदिग्विभागे ॥
एको लघुर्दक्षिणपूर्व्वगः स्यात्
तद्वृद्धभाङ् सुखमण्डपेन ।
द्वौ पूर्व्वतो दक्षिणतस्तथैको
युग्मं भवेन्मण्डपगं युतेन ॥
मुखे युगा दक्षिणतस्तथैको
द्वौ मण्डपेऽस्मिन् ध्वजनाभिधानम् ।
महान्तगेहं सुखगे त्रिके तु
युग्मान्वितं मण्डपमेतदेव ॥
मुखे तथा मण्डपके च युग्मं
वामेऽपसव्ये युगलं लघोश्च ।
लोकत्रयाडम्बरमस्य नाम
महत्तरं शम्भुगणेशयोश्च ॥
युग्मं मुखे मण्डपगं द्वयं स्या-
त्तथा द्वयं दक्षिणवामतश्च ।
एको हि पश्चाद्दरदाभिधानं
श्रीविश्वकर्म्मोक्तमनाद्विशालम् ॥
मालीनभं द्वं सुखगैश्चतुर्भि-
र्युग्मं भवेद्दक्षिणवामभागे ।
युग्मं तथा पश्चिमदिग्विभागे
सत्स्थापतो मण्डप एक एव ।

प्राग्भासा लघवो विलासभवने वामे लघुर्दक्षिणे
तद्वेन्मण्डलसंयुतञ्च कमलं स्याद्वृद्धिदं सौख्य-
दम् ।
वेदाखूदरके मुखे च सततं वामेऽथवा दक्षिणे
तस्याग्रे सुखमण्डपस्य फलदानेवं गृहान्
षोडश ॥”

इति हर्म्यादिषोडशगृहाणि ॥*॥

“अथ त्रिशालं त्रिदशैश्चयैकं
स्यात्त्रिदशावासमरूपसंज्ञम् ।
तथा चतुर्थं कुमुदाभिधानं-
हर्म्यादिभेदैः क्रमतो विधेयम् ॥
छत्रं ह्यलिन्दश्च तथैव पुत्रं
हरश्च कामन्त्वथ हृष्टभद्रम् ।
षट्कश्च मध्ये स्वधनं कुवेरं
पद्मं तथा कामदमेतदेव ॥
अलिन्दयुग्मं त्वथ भद्रयुक्तं
मध्ये कपाटं जलजाभिधानम् ।
स्याच्छिवजं चैव गजं तपश्च
षड्दारु मध्ये सकले यथातः ॥
स्याद्वैजयं मण्डपहृष्टभद्रं
जयं निनादं त्वथ कीर्त्तिजञ्च ।
भद्रोनङ्गस्वाधिकवाकलाङ्ग
निर्लोभकं वाचदकौशले च ॥
नैऋतं क्रमादौम्बरवारदाख्यं
भौमञ्च कौशल्यमतः क्रमेण ।
तद्वद् बुद्धस्वजनं तृतीयं
स्यात् कौशलं नीलमिदं चतुर्थम् ॥
सुखगुणलघुवामे दक्षिणे चैक एत-
दरदशरदसुक्तं दण्डकं वाकपद्मम् ।
इदमिह हि निनादं मण्डनाधिकं स्या-
मदनु च गजनादं वाकुलं कीर्त्तिदाख्यम् ॥
हर्म्यादिरूपसुखमण्डपमेव सिंहं
शेषे गृहे ह्यगजे च्चेऽपि कोशसंज्ञम् ।
वामेऽधिकञ्च लघुना कथितं सुभद्रं
स्यान्माणिभद्रमपि रत्नकाञ्चनाख्ये ॥
युगमुखमपरे को भैरवं दक्षिणे च
भरत नरनमेतत् स्याच्चतुर्थं कुबेरम् ।
पुनरपि लघु वामे हस्तियानं वियानं
ध्वजश्रवणगेहं तच्चतुर्थं क्रमेण ॥
वर्णानां शुभदञ्च सागरगृहं पञ्चैव कृत्वा मुखे
प्रोक्तं चौरहरन्दराख्यमिदं कोलाहलचापरम् ।
षड्दारुद्वयभद्रषण्णवलक्ष्य्यंक् युतं शालया
गान्धर्व्वं क्षितिभूषणञ्च कथितं सर्व्वत्रकं दर्प-
कम् ॥
धान्यं हृद्धिकरं त्रिशालमुदितं शाला विना
याम्यगो
शाकशाला रहितं शुभं निगदितं सुक्षेत्रमर्थ-
प्रदम् ।
सुलोचनमिदं करोति मरणं हीनं तथा
याम्यया
पक्षघ्नं मदिरान्तके च भवनं तत्पुत्रवन्धुक्षयम् ॥”

इति त्रिशालादिषोडशगृहाणि ॥*॥

"त्रैशालानि च षोड़श प्रथमतः सौमस्य षड्-
दारुकं
तच्चैकेन पुरोऽपि शङ्करमिदं मध्ये क्रमात्
पूर्ववत्।
रुद्रे द्वौ मुखतोऽपि दक्षिणलघुस्त्वेकाधिकं
सागरं,
चत्वारो नृपशोभितश्च पुरतः प्राग्दक्षिणैको
लघुः ॥
पश्चाग्रे सकलं भ्रमश्च लघुना सर्व्वस्य तत्
सौख्यदं
रागाख्यं भ्रमसंयुतश्च भवनं तत् सर्व्वशालं
भवेत्।
प्राग्वारुणकुलनन्दनं क्रमतया त्वेकद्वयैकान्वितं
तस्मिन्दक्षिणसंयुते च लघुके कल्याणसंज्ञं तथा॥
सर्व्वाशासु लघुत्रयं शरमुखं तत् पट्टयुग्मं
क्रमात्
तत्सौभाग्यविवर्द्धनश्च भवनं राज्ञां सदा निर्म्मि-
तम्।
आनन्दं मुखराजिदक्षिणलघुर्वामे च पृष्ठे द्वयं
रागास्यं जनशोभनं गुणगणैर्केनान्वितं स्थितः॥
स्याच्छ्रीवर्द्धनमग्रतो रसयुतं युग्माग्निनेत्रैः क्रमात्
अग्राग्रे त्रिगुणं त्रिकञ्च लघवो लोकत्रिकं
सुन्दरम्।
गेहं श्रीतिलकं च भद्रसहितं ह्रस्वेन हीनं मुखे
तद्युक्तं लघुना च भद्रसहितं विष्णुप्रियं
भूपतेः ॥"

इति सौमादिषोड़शगृहाणि ॥*॥

"षड्दारुकं श्रीविदशं त्रिशालं
तत् श्रीनिवासं मुखह्रस्वयुक्तम्।
श्रीवत्सतः श्रीधरमेव दृष्ट्वा
श्रीभूषणं वेदमुखश्च गेहम् ॥
बाणैः श्रीजयमग्रतोऽपि ऋतुभिः श्रीतेलिकं
मन्दिरं
रागाग्र रसदारुयुग्मसहितं तत् श्रीविलासं
भवेत्।
श्रीतेजोजयमग्रतश्च मुनिभिः षड्दारु युग्मान्वितं
सौमादित्रिदशादिभूपतिगृहाः पञ्चाधिका
विंशतिः ॥"

इति त्रिदशादिनवगृहाणि ॥*॥

"भवननवकमुक्तं यच्चतुःशालमध्यात्
गयनलघुमुखं स्याद्दक्षिणेकेन चन्द्रम्।
भवति सदननध्ये सर्व्वतो दारुषट्कं
द्वितयमपि च तेषामन्तिमं युग्मयुक्तम् ॥
मलयमथ च गेहं वामह्रस्वाधिकं स्यात्
भवति च गुणह्रस्वं शोभनं पूर्व्वतोऽपि।
त्रिभिरपि च मुकर्या पृष्ठयाम्ये तथैक-
स्तदधिकमपि वामे वैभस नागेन्द्रसंज्ञम् ॥
चक्रं चतुष्टयमुखं सकलेषु प्राप्तं
याम्योत्तरे हि लघुनापि जयावहं स्यात्।
भद्राङ्गयच मकराङ्गयमेव तस्मिन्
पृष्ठाग्रहस्वमपि कामदमग्रभद्रम् ॥"

इति विजयादिनवचतुःशालगृहाणि ॥*॥

"शुद्धादयो मुनिमतेऽष्टविधा च शाला-
स्तासां षडेव कथिता भवनप्रसङ्गे।
शालालिमध्यरचितोऽपि लघुः सुखाय
यदा तदग्ररचिताः पृथगेव शाला: ॥"

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राज-
वल्लभे द्विशालत्रिशालचतुःशालगृहलक्षणवर्णनं
सप्तमोऽध्यायः ॥ * ॥

"शयनमथ नृपाणां त्वङ्गुलानां शतैकं
नवतिरपि सुतानां मन्त्रिणः षड्विहीनम्।
बलपतिगुणहस्तं त्र्यङ्गुलोनं गुरोश्च
तदनु युगलहीनं ब्राह्मणादेः प्रशस्तम् ॥
व्यासोऽष्टभागे नतदैर्घ्यतश्च
कलावत्यात्रोऽधिक एव शस्तः।
त्र्यंशेन पादेन समुच्छ्रयः स्यात्
द्वित्र्यङ्गुलानामधिको न कार्यः ॥
श्रीपर्णी धनदाशनोऽपि गदहा वित्तप्रदा तिन्दुकी
वृद्धिः शिंशपयाथ शाकशयने शर्म्मापि शालैः
शते।
आयुः पद्मकजे च चन्दनमये शत्रुक्षयः स्यात्
सुखं
श्रेष्ठं चैकमलं शिरीषजनितं पर्य्यङ्कयाना-
सनम् ॥"

इति शयनम् ॥ * ॥

"सिंहासनं चोत्तममङ्गुलानां
षष्ट्या दशोनश्च परं तथैव।
दशांशवर्गस्त्रमनो विहीनं
व्यासे च दैर्घ्यार्द्धसमुच्छ्रयः स्यात् ॥
मुनिभिरथ शिवैर्वा भद्रभागत्रयं स्या-
दुदय इति विभागैर्भाजिते पीठमष्टौ।
कनकमपि रसांशं सप्तधा ग्रासपट्टी
शिवनवमुनिरत्नैर्दन्तिवाही निवेद्यौ ॥
छाद्यं स्याद्रसभागमेव तिथितो भागेन कक्षासनं
युक्तं स्तम्भयुगेन तोरणयुतं रत्नैः शुभे राजि-
तम्।
कर्त्तव्यं नृपवल्लभं मतिमता ज्येष्ठश्च सिंहासनं
ज्ञातव्यश्च यशोऽभिवर्द्धनमिभैः सिंहैर्नृकक्षा-
सनम् ॥
नरेस्तु वेदी पुनरेव छाद्यं
सुखासनं तोरणसंयुतं स्यात्।
पीठश्च कुम्भः कलशं विटङ्क-
सुतङ्गसंज्ञं सह छाद्यकेन ॥
पीठे गोहरिवेदिके च सुयशश्छादीन सिंहासनं
हस्तौ मात्रकवेदिकासनयुतं तद्दीपचित्रं भवेत्।
छत्रं ज्येष्ठमशीतिवेदसहितं द्वासप्ततिर्मध्यमं
षष्ट्या कन्यसमङ्गुलैर्नरपतेर्देवं शताङ्गं शुभम् ॥"

इति सिंहासनछत्रलक्षणानि ॥ * ॥

"वातायनो लुम्बिकया विहीनो
बुधैरुदीर्णश्चिपताक एव।
द्विलुम्बिकश्चोभयसंज्ञकश्च
यः स्वस्तिकोऽसौ युगलुम्बियुक्तः ॥
स्याद्वाणैः प्रियवक्र एव सुमुखः षड्भिः पुन-
श्चेति च
छाद्यैकेन युतः सुवक्र उदितो द्वाभ्यां प्रियङ्गो
भवेत्।
एकोनः परिपद्मनाभ उदितस्तद्दीपचित्रो युगे
र्व्वैचित्रः शरपङ्क्तिभिस्तु विविधाकारैर्युतः
पञ्च च ॥
सिंहो दैर्घ्यविवर्द्धितो हि पृथुले हंसो गवाक्षो
भवेत्
कुम्भोऽसौ मतिदोऽपि भद्रसहितो ज्ञेयस्तु
मुद्रार्णवः।
द्वारेणेव युगास्त्रकेण गरुड़ः पक्षद्वये जालकं
प्रोक्ताः पञ्चदशैव रूपमदना वेद्यादिकक्षा-
सनैः ॥"

इति पञ्चदश गवाक्षाः ॥ * ॥

"सभा च नन्दा परतोऽथ भद्रा
जया च पूर्णा क्रमतोऽपि दिव्या।
पद्मी सुरत्नोद्भविकोत्पलाष्टौ
बुधैर्व्विधेयावनिपालगेहे ॥
चैवं चतुष्पदैरपि षोड़शांशं
मध्ये तुरीयपदमेकपदो लघुश्च।
नन्देति भद्रसहिता च पदेन भद्रा
तद्वेदतश्च जयदा लघुना च पूर्णा ॥
दिव्या सभा केवलनन्दभागा
भद्रैश्चतुर्भिः सहिता च पद्मी।
रत्नोद्भवा स्याद्युगतोऽपि तुल्ये-
स्तथोत्पलाख्या प्रतिभद्रतश्च ॥
स्तम्भैस्तोरणराजितैश्च मदला निर्यूहवैतानकै-
र्लूम्बाद्यैर्गजसिंहराजविविधैर्नृत्यान्वितैः
शोभितम्।
रत्नस्फाटिकरङ्गभूमिनृपतेः क्रीड़ास्पदं मण्डपं
कुर्य्याद्दक्षिणभद्रकं च रुचिरां यन्मध्यतो वेदि-
काम् ॥"

इति सभाष्टकम् ॥*॥

"वेदी कोणचतुष्टयेन सकले पाणिग्रहे स्वस्तिका
कल्याणं रविकोणकैश्च नृपतेः सा भद्रिका
सर्व्वदा।
कोणैः श्रीधरिका च विंशतिमितैस्त्रिसोऽम-
राणां गृहे
कोणैरष्टभिरन्विता च शुभदा चण्डार्चने
पद्मिनी ॥
विप्रे सप्तकराश्च भूपभवने षट्पञ्च वैश्ये तथा
कुर्य्याद्धस्तचतुष्टयाश्च नृपते त्रिहेरकतो हीनके।
तस्योर्द्धे च नरेश्वरासनमतो मण्डं चतुस्तम्भकं
हैम्ना मौक्तिकपट्टकूलमणिभिः सौम्यानन्तं
राजितम् ॥"

इति वेदिकाचतुष्टयम् ॥*॥

"दीपस्तम्भं त्रिकरमुदये षड्भिरूनं क्रमेण
हस्तान्तं तं विहितमपि तैः पीठकुम्भान्वितश्च।
दीपस्योर्द्धे कनककलसं शोभितं कङ्कणाद्यैः
कुर्य्याद्वातोरथ तदमतो नागवल्ली विवर्ज्यैः ॥"

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभे शयनसिंहासनछत्रगवाक्षसभा-
ष्टकवेदिकाचतुष्टयदीपस्तम्भलक्षणं ८ अध्यायः ॥

"ममापि किं नो दयसे दयाघन
त्वदङ्घ्रिसर्गं यदि देव्य मे मनः ।
निमज्जयन् सन्तमसे पराशयं
विधिस्तु वाच्यः क सवाशसः कथा ॥"
इति नैषधे ९ सर्गः ॥

सन्तर्पणं, क्ली, ( सन्तर्पयति इन्द्रियाणीति । सं + तृप् + णिच् + ल्युः । ) द्राक्षादाडिमखर्जूरीकदलीशर्करालाजाच्चूर्णमध्वाज्यसंमिलितम् । इति राजनिर्घण्टः ॥ तृप्तिकारके, त्रि । यथा,
"पुण्यो महाब्रह्मसमूहजुष्टः
सन्तर्पणो नाकसदां वरेण्यः ।
जन्माल लोकस्थितये स राजा
यथाध्वरे वह्निरभिप्रणीतः ॥"
इति भट्टिकाव्ये १ सर्गः ॥

सन्तानः, पुं, ( सन्तनोति विस्तारयति पत्रपुष्पादीनिति । सम् + तन विस्तारे + "सनोतेरण सन्ज्ञायाम् ।" ३ । १ । १४० । इत्यस्य वार्त्तिकोक्त्या णः । ) कल्पवृक्षः । ( सन्तन्यते इति । तन + घञ् । ) वंशः । इत्यमरः ॥ विस्तारः । ( यथा, महाभारते । १ । १०३ । १० ।
"तयोरुत्पादयापत्यं सन्तानाय कुलस्य नः ।
मन्नियोगात् महाबाहो धर्म्मं कर्त्तुमिहार्हसि ॥")
अपत्यम् । इति मेदिनी ॥ ( यथा, मनुः । ९ । ५९ ।
"देवराद्वा सपिण्डाद्वा स्त्रिया सम्यक् नियुक्तया ।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥" )
तद्वैदिकपर्य्यायः । तुक् १ तोकम् २ तनयः ३ तोक्म ४ तक्म ५ शेषः ६ अप्नः ७ गयः ८ जाः ९ अपत्यम् १० यहुः ११ सूनुः १२ नपात् १३ प्रजा १४ बीजम् १५ । इति पञ्चदशापत्यनामानि । इति वेदनिघण्टौ । २ । २ ॥ (व्याधिविशेषे, क्ली । यथा, महाभारते ।५।६६।४०।
"सन्तानं नर्मकं घोरमाख्यमोदकमप्रमम् ।
एतैर्विद्धाः सर्व्व एव मरणं यान्ति मानवाः ॥")

सन्तानिका, स्त्री, ( सन्तानो विस्तारोऽस्त्यस्या इति । सन्तान + ठन् । ) क्षीरसरः । मर्कटजालकः । छुरिकाफलम् । फेनः । इति धाराणी ॥ व्यञ्जनस्य गुणाः ।
"सन्तानिका गुरुः शीता वृष्या पित्तास्रवातजित् ॥"
इति राजनिर्घण्टः ॥
मिष्टान्नविशेषः । सरभाजा इति भाषा । तत्करणप्रकारो यथा । दुग्धं शरावचतुष्टयं शर्करार्द्धशरावपरिमिता दत्तं शरावमग्निस्थं प्रतीत्य तद्दुग्धे व्यजनेन घनीभूते उपरि स्थितिमत्यान-ह्निन मधुनेन बहुतरको भविष्यति । तत्फेनसन्निकृष्य तत्पात्रोपरिस्थितं सरो जायते । तं सरमस्तेन चतुष्कोणाकृतिं निर्माय पश्चात् सरसस्तस्य शर्करारसे मग्नं कुर्य्यात् । किन्तु मध्याधिकपाकं न रचेत् । इति पाकराजेश्वरः ॥ (बालकपन्तुः । यथा, सुश्रुते ।१।२५।
"तत ऊर्द्ध्वं सन्तानमकस्यात्युदये.... । तद्यथा शौनकादीनि.... विदुररणुदूपस-मन्तानिकार्य्योदीनीति ॥" )

सन्तापः, पुं, ( सं + तप + घञ् । ) अग्नितापः । तत्पर्य्यायः । संज्वरः २ । इत्यमरः ॥ तापः ३ शुचः ४ उष्णा ५ । इति राजनिर्घण्टः ॥ सम्यक् तापनञ्च ॥ ( यथा, कथासरित्सागरे । १५ । ७५ ।
"जन्मना ज्वरसन्तापपीडां गाढमवाप सः ॥"
दुःखम् । यथा, भागवते । ६ । १४ । ४१ ।
"दासीनां कोऽनु सन्तापः स्वामिनः परिचर्य्यया ।
अभीक्ष्णं लभ्यमानानां दास्या दासीव दुर्भगाः ॥")

सन्तापनः, पुं, ( सन्तापयतीति । सं + तप + णिच् + ल्युः । ) कामदेवस्य पञ्चबाणान्तर्गतबाणविशेषः । इति त्रिकाण्डशेषः ॥ सम्यक्तापकारके, त्रि ॥ (यथा, भागवते ।७।१०।२६।
"दिष्ट्या ते निहतः पापो लोकसन्तापनोऽसुरः ॥" )

सन्तापितः, त्रि, ( सं + तप + णिच् + क्तः । ) अध्वादिना श्रान्तः । इत्यमरभरतौ ॥ अस्य पर्य्यायः सन्तप्तशब्दे द्रष्टव्यः ॥

सन्तिः, स्त्री, ( सनु दाने + क्तिच् । "सनः क्तिचि लोपश्चास्यान्यतरस्याम् ।" ६ । ४ । ४५ । इति नलोपाभावः । ) दानम् । अवसानम् । इत्यमरे मानिशब्दटीकायां नीलकण्ठः ॥ सतिश्च सातिश्च सन्तिसाती । सनोतेराशिषि तिशन्तस्य एतौ निपात्यौ । पक्षे सनुतात् इति वाक्ये तिकिकृते इवचतेरिति इमनिषेधे वनतेलोपश्च तिकिवर्ज्जनात् नलोपाभावे सन्तिः । इति मुग्धबोधटीकायां दुर्गादासः ॥ सन्तिशब्दो निर्विसर्गशेष अस लभावे इत्यस्मात् अन्तिप्रत्ययेन निष्पन्नः । यथा,—
"सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून् ।"
इति महाभारते विराटपर्व्व ॥

सन्तुष्टः, त्रि, ( सं + तुष + क्तः । ) सन्तोषयुक्तः । यथा, —
"गच्छध्वममराः सर्व्वे गृहीत्वार्घ्यं स्वमालयम् ।
सन्तुष्टा वरमस्माकं दत्तेदानीं सुपूजिता ॥"
इति छन्दोगदशोत्सर्गतत्त्वम् ॥

सन्तोषः, पुं, ( सं + तुष + घञ् । ) सन्तुष्टिः । तत्पर्य्यायः । धृतिः २ स्वास्थ्यम् ३ । इति हेमचन्द्रः ॥ ( यथा, हितोपदेशे ।
"सन्तोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥" )

सन्दंशः, पुं, (सन्दशतीति । सं + दन्श + अच् ।) कङ्कमुखः । इति हेमचन्द्रः ॥ सँड़াসী इति भाषा ॥ ( यथा, मार्कण्डेये । १४ । ६३ ।
"निपातितानां भूपृष्ठे उद्दलानि निरोधताम् ।
सन्दंशैः पश्य कृन्तन्ति नरैर्य्याम्यैर्मुहुर्मुहुः ॥"
वैद्यशास्त्रोक्तयन्त्रविशेषः । यथा, सुश्रुते ।१।७।
"तत्र मनःशरीराबाधकराणि शल्यानि तेषामाहरणोपायो यन्त्राणि । तानि षट्प्रकाराणि । तद्यथा । स्वस्तिकयन्त्राणि । सन्दंशयन्त्राणि । ... द्वे सन्दंशयन्त्रे सनिग्रहोऽनिग्रहश्च ।

सन्दंशौ षोडशाङ्गुलौ भवतस्त्वङ्मांससिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते ॥" )

सन्दंशिका, स्त्री, ( सन्दंशतीति । सं + दन्श + ण्वुल् । टापि अत इत्वम् । ) क्षुद्रीकुटी । सँड़াসী इति चिमटा इति च भाषा । लौहयन्त्रविशेषः ॥ कातारि इति भाषा । इति मेदिनी ॥

सन्दर्भः, पुं, ( सं + दृभ ग्रन्थने + घञ् । ) रचना । इति हलायुधः ॥ ( यथा, आर्य्यासप्तशत्याम् । ७०० ।
"कविसमरसिंहनादः स्वराहुवादः सुधैकसंवादः ।
विद्वद्विनोदकन्दः सन्दर्भोऽयं मया सृष्टः ॥" )
प्रबन्धः । इति त्रिकाण्डशेषः ॥ ग्रन्थनम् । यथा,—
"सन्दर्भो रचना गुम्फः श्रन्थनं ग्रन्थनं समाः ।"
इति हेमचन्द्रः ॥
तस्य लक्षणं यथा,—
"गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा ।
नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः ॥"
इति रूपसनातनगोस्वामिकृत श्रीभागवतीयषट्सन्दर्भस्य प्रथमसन्दर्भकारिका ॥

सन्दर्शनं, क्ली, ( सं + दृश + ल्युट् । ) सम्यक्प्रकारेण दर्शनम् । यथा,—
"सन्दर्शनार्थमम्बाया नदीपुलिनसंस्थितः ।
स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥
( सं + दृश + णिच् + ल्युट् । कारितदर्शनम् । यथा, महाभारते । १ । २ । १९० ।
"यक्षसन्दर्शनाद्भ्रो धर्म्मराजस्य सन्निधौ ॥")

सन्दानं, क्ली, ( सं + दा + ल्युट् । ) दाम । इत्यमरः ॥ सम्यग्दानञ्च ॥

सन्दानः, पुं, गजस्याष्ठीवतोरधोभागः । इति त्रिकाण्डशेषः ॥

सन्दानिका, स्त्री, अरिखदिरः । इति राजनिर्घण्टः ॥

सन्दानितः, त्रि, (सन्दानं जातमस्येति । सन्दान + इतच् । ) बद्धः । इत्यमरः ॥

सन्दानिनी, स्त्री, गोगृहम् । इति हेमचन्द्रः ॥ गोयालि इति भाषा ॥

सन्द्रावः, पुं, ( सं + द्रु + "समि युद्रुदुवः ।" ३ । ३ । २३ । इति घञ् । ) पलायनम् । इत्यमरः ॥

सन्दाहः, पुं, ( सं + दह + घञ् । ) मुखतालोष्ठदाहः । इति राजनिर्घण्टः ॥

सन्दिग्धः, त्रि, ( सं + दिह + क्तः । ) सन्देहयुक्तः । यथा,—
"न तावत् सन्दिग्धसाध्यधर्म्मत्वं पक्षत्वमिति पक्षतासत्त्वम् ॥"

सन्दिग्धमतिः, त्रि, सन्देहविषयीभूतबुद्धियुक्तः । सन्दिग्धा मतिर्यस्य इति बहुव्रीहिसमासनिष्पन्नः ॥

सन्दिग्धार्थः, पुं, ( सन्दिग्धोऽर्थः । ) सन्देहविषयीभूतार्थः । (सन्दिग्धोऽर्थो यस्य ।) तद्विशिष्टे, त्रि ॥

सन्दितः, त्रि, (सं+दो अवखण्डने+क्तः ।) बद्धः । इत्यमरः ॥

सन्दिष्टं, क्ली, (सं+दिश+क्तः ।) वार्त्ता । इति शब्दरत्नावली ॥ कथिते, त्रि ॥

सन्दिष्टार्थः, पुं, (सन्दिष्टोऽर्थो यस्य ।) सन्देशहरः । इति केचित् ॥

सन्दिहानः, त्रि, (सं+दिह+शानच् ।) सन्दिग्धः । यथा, जटाधरः ।
"सन्दिहानः सांशयिकः संशयापन्नमानसः ॥"

सन्दी, स्त्री, खट्टा । यथा । निघ्नी खट्टिका सन्दी । इति त्रिकाण्डशेषः ॥

सन्दीप्यः, पुं, मयूरशिखावृक्षः । इति शब्दचन्द्रिका ॥

सन्देशः, पुं, (सं+दिश+घञ् ।) संवादः । इति शब्दरत्नावली ॥ (यथा, मेघदूते । ७ ।
"सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम् ॥")
स्वनामख्यातमिष्टान्नविशेषश्च ॥

सन्देशवाक्, [च्] स्त्री, (सन्देश एव वाक् ।) संवादः । तत्पर्य्यायः । वाचिकम् २ । इत्यमरः ॥

सन्देशहरः, पुं, (हरतीति । हृ+अच् । सन्देशस्य हरः ।) दूतः । इत्यमरः ॥ (यथा, रघुः । ३ । ६६ ।
"तवैव सन्देशहरात् विशांपतिः
शृणोति लोकेश ! तथा विधीयताम् ॥")

सन्देशहारकः, पुं, (सन्देशं संवादं हरतीति । हृ+ण्वुल् ।) दूतः । इति हेमचन्द्रः ॥

सन्देहः, पुं, (सं+दिह+घञ् ।) एकधर्म्मिकविरुद्धभावाभावप्रकारकं ज्ञानम् । इति सिद्धान्तमुक्तावली ॥ तत्पर्य्यायः । विचिकित्सा २ संशयः ३ द्वापरः ४ । इत्यमरः ॥ (यथा, महाभारते । ३ । ५७ । १? ।
"तान् समीक्ष्य ततः सर्व्वान् निर्व्विशेषाकृतीन् स्थितान् ।
सन्देहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥")

सन्दोहः, पुं, (सं+दुह+घञ् ।) समूहः । इत्यमरः ॥ (यथा, आर्य्यासप्तशत्याम् । ५८६ ।
"स्तनतटनखलेखालम्बी तव घर्म्मबिन्दुसन्दोहः ।
आभाति पट्टसूत्रे प्रविशन्निव मौक्तिकप्रसरः ॥")

सन्द्रावः, पुं, (सं+द्रु+"समि युद्रुदुवः ।"३ । ३ । २३ । इति घञ् ।) पलायनम् । इत्यमरः ॥

सन्धा, स्त्री, (सं+धा+अङ् ।) स्थितिः । प्रतिज्ञा । इति मेदिनी ॥ (यथा, रघुः । १४ । ५२ ।
"गङ्गां निषादाहृतनौविशेषस्ततार सन्धामिव सत्यसन्धः ॥")
सन्धानम् । इति शब्दरत्नावली ॥ सन्ध्या । यथा । सन्धा द्विजन्मनो पितृप्रसूः । इति भरतधृतवाचस्पतिः ॥

सन्धानं, क्ली, (सन्धीयते यदिति । सं+धा+ल्युट् ।) मद्यसन्धानकरणम् । इति नयनानन्दः ॥ तत्पर्य्यायः । अभिषवः २ । इत्यमरः ॥ सन्धानी ३ सन्धिका ४ । इति शब्दरत्नावली ॥ सन्धीयते सन्धानं वंशाङ्कुरफलादीन् बहुकालं सन्धाय यत् क्रियते । इति भरतः ॥ सङ्घट्टनम् । इति मेदिनी ॥ (यथा, कुमारे । ५ । २७ ।
"मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥")
काञ्जिकम् । इति हलायुधः ॥ मदिरा । अश्वदंशः । सौराष्ट्रम् । इति राजनिर्घण्टः ॥ धनुषि बाणयोजनम् । यथा,—
"तदाशु कृतसन्धानं प्रतिसंहर शायकम् ।
आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि ॥"
इत्यभिज्ञानशकुन्तलायाम् १ अङ्कः ॥
अन्वेषणम् । इति लोकप्रसिद्धम् ॥ (सन्धिः । यथा, महाभारते । ५ । १० । ३३ ।
"एवं कृते तु सन्धाने वृत्रः प्रमुदितोऽभवत् ।
यत्तः समभवच्चापि शक्रो हर्षसमन्वितः ॥")
सन्दधातीति । सं+धा+ल्युः । धारके, त्रि । यथा, सुश्रुते । १ । ४५ ।
"मधु तु मधुरं कषायानुरसं * * हृद्यं सन्धानं शोधनं रोपणमिति ॥")

सन्धानिका, स्त्री, (सन्धानमस्त्यस्या इति । सन्धान+ठन् ।) खाद्यद्रव्यविशेषः । आचार इति भाषा । तत्करणप्रकारो यथा । अपक्वाम्रफलानि विंशतिः राजिका शरावषोडशैकभागमिता मरिचं तोलकद्वयं लवणं षट्तोलकं मेथिकार्द्धतोलकं जीरकं तोलकद्वयं हरिद्रातोलकैकं नागरमुस्तकमेकतोलकं कृष्णजीरकं तोलकैकं गृहीत्वा आम्रभिन्नं सकलद्रव्यं चूर्णयित्वा एकत्रीकुर्य्यात् । आम्रन्तु दीर्घं द्विखण्डं चतुःखण्डं वा कृत्वा अष्ठीं दूरीकृत्य तदभ्यन्तरं पूर्व्वोक्तचूर्णं पूरयित्वा शलाकया विद्धाखण्डाम्रवत् कुर्य्यात् । ततस्तैले निमज्जयेत् । इति पाकराजेश्वरः ॥

सन्धानितः, त्रि, सन्धानविशिष्टः । सङ्घट्टितः । सन्धानशब्दादितप्रत्ययेन निष्पन्नः ॥

सन्धानिनी, स्त्री, गोगृहम् । इति केचित् ॥

सन्धानी, स्त्री, (सन्धीयते यस्यामिति । सं+धा+ल्युट् । ङीप् ।) कुप्यशाला । इति हेमचन्द्रः ॥ सन्धानम् । इति शब्दरत्नावली ॥

सन्धिः, पुं, (सन्धानमिति । सं+धा+किः ।) राजादीनां षड्गुणान्तर्गतगुणविशेषः । स तु स्वर्णादिदानेन बन्धुभिः प्रीत्युत्पादनात् मित्रीकरणम् । मेल इति ऐक्य इति च भाषा । तद्विवरणं यथा,—
"यनवद्धो भवेत सन्धिः स्वयं हीनस्तमाचरेत् ।
मर्य्यादाभङ्गनं नास्ति यदि शत्रावपि स्थितिः ॥
मर्य्यादाभङ्गनं यत्र शत्रौ संशयितं भवेत् ।
न तं संशयितं कुर्य्यादित्युवाच बृहस्पतिः ॥
बलवद्विग्रहीतः सन् नृपोऽनन्यप्रतिक्रियः ।
आपन्नः सन्धिभावेन विदध्यात् कालयापनाम् ॥
ये च दैवेनोपहता राष्ट्रं येषाञ्च दुर्गतम् ।
बहवो रिपवो येषां तेषां सन्धिर्विधीयते ॥
दुर्म्मन्त्री भिन्नमन्त्रश्च नीचधर्म्मरतश्च यः ।
एतैः सन्धिं न कुर्व्वीत विशेषात् पूर्व्वपीडितैः ।
सन्धिं हि तादृशैः कुर्व्वन् प्राणैरपि हि हीयते ॥"
इति भोजराजकृतयुक्तिकल्पतरुः ॥ * ॥
षोडशविधसन्धिर्यथा,—
"बलीयसाभियुक्तस्तु नृपो नान्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत् कुर्व्वाणः कालयापनम् ॥
कपाल १ उपहारश्च २ सन्तानः ३ सङ्गत-४ स्तथा ।
उपन्यासः ५ प्रतीकारः ६ संयोगः ७ पुरुषान्तरः ८ ॥
अदृष्टनर ९ आदिष्ट १० आत्मादिष्ट ११ उपग्रहः १२ ।
परिक्रय- १३ स्तथोच्छिन्न- १४ स्तथा च परभूषणः १५ ॥
स्कन्धोपनेयः १६ सन्धिश्च षोडशैते प्रकीर्त्तिताः ।
इति षोडशकं प्राहुः सन्धिं सन्धिविचक्षणाः ॥"
तेषां लक्षणानि । यथा,—
"कपालसन्धिर्व्विज्ञेयः केवलं समसन्धितः । १ ।
सम्प्रदानाद्भवति य उपहारः स उच्यते ॥२॥
सन्तानसन्धिर्व्विज्ञेयो दारिकादानपूर्व्वकः ।३।
सद्भिस्तु सङ्गतः सन्धिर्म्मैत्रीपूर्व्व उदाहृतः ॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनम् ।
सम्पत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥
सङ्गतः सन्धिरेवायं प्रकृष्टत्वात् सुवर्णवत् ।
तथान्यैः सन्धिकुशलैः काञ्चनः स उदाहृतः ॥४॥
आत्मकार्य्यस्य सिद्धिस्तु समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ५ ॥
मयास्योपकृतं पूर्व्वं ममाप्येष करिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥"
अन्यच्च ।
"उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयञ्चापि प्रतीकारो रामसुग्रीवयोरिव ॥६॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
समं हि तत्प्रमाणेन स च संयोग उच्यते ॥७॥
आवयोर्य्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन् पणस्तु क्रियते स सन्धिः पुरुषान्तरः ॥८॥
त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वमाविति ।
यत्र शत्रुः पणं कुर्य्यात् सोऽदृष्टपुरुषः स्मृतः ।९।
यत्र भूम्येकदेशेन पणेन रिपुवर्ज्जितः ।
सन्धीयते सन्धिविद्भिः स चादिष्ट उदाहृतः ॥१०॥
स्वसैन्येन तु सन्धानमात्मादिष्ट उदाहृतः ।११।
क्रियते प्राणरक्षार्थं सर्व्वदानादुपग्रहः ॥१२॥
कोषांशेनार्द्धकोषेण सर्व्वकोषेण वा पुनः ।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥१३॥
भुवां सारवतीनान्तु दानादुच्छिन्न उच्यते ।१४।
भूम्युत्थफलदानेन सर्व्वेण परभूषणः ॥ १५ ॥
परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।

"त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥"

इति प्रायश्चित्ततत्त्वम् ॥

तत्कार्य्यवं यथा,—
"समुद्रे हिमवत्पार्श्वे गयायाञ्चाप्य दुर्म्मते ।
रात्रावहनि सन्ध्यायां कस्य शुभः परिग्रहः ॥"

इति तिथ्यादितत्त्वम् ॥ ६ ॥

त्रिसन्ध्यकार्य्योपासना । तत्कालोपास्या देवता । यथा । अथ सन्ध्योपासनम् । तत्र छन्दोगपरिशिष्टम् ।
"अत ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम् ।
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥"

अतः प्रातःस्नानानन्तरम् । तथा,—
"एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥"

शातातपः ।
"अध्यास्त्रासु षट् प्रोक्ता ऋषिणा तत्त्ववादिना ।
आद्यो राजभृतस्तथा द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनागतान्तु यः पूर्व्वां सादित्याञ्चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥"

राजभृतो राजसेवकः । ग्रामादिभृतो भरणीयः । आसन्नसन्ध्यायां मार्कण्डेयपुराणम् ।
"तथा सूतकमध्यास्तु सन्ध्योपस्थानवर्ज्जिताः ।
दीक्षोपयोगभूतश्चि वयतिर्नोमसंज्ञिका ॥"
अत्र सन्ध्यात्रयस्य नित्यत्वाभिधानात् ।
"सर्व्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥"
इति विष्णुपुराणीये सन्ध्याया इवेकवचनान्तपाठो धर्म्मकोषोक्तो युक्तः । एवमेव नयवर्द्धमानः । सर्व्वकालं प्रातर्म्मध्याह्नसायंरूपकालत्रये । अन्यथा तदुपादानं व्यर्थं स्यात् । विभ्रमश्चित्तविक्षेपः । तेन रुग्णातुरावपि सन्ध्यामाचरन्ति । अतएव याज्ञवल्क्यः ।
"सर्व्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः ।
ब्राह्मण्यान्न स हीयेत कल्पकल्पगतोऽपि सन् ॥"
सर्व्वावस्थोऽपि नित्यं नैमित्तिककर्म्मरतोऽपि । यथोक्तिनष्टोऽप्यशक्तोऽपि इति रत्नाकरः ॥ सन्ध्यात्रयस्याप्यसंस्पर्शेऽपीति युक्तम् ॥ ७ ॥ सन्ध्याशब्दमाधारयलक्षणमाह योगियाज्ञवल्क्यः ।
"सर्य्याच्चैव वेदानां ब्रह्मादीनां समागमः ।
सन्धिः सर्व्वसुराणाञ्च तेन सन्ध्या प्रकीर्त्तिता ॥"
सन्ध्याद्वयकालस्तु अहोरात्रसन्धिमुहूर्त्तात्मकः । तथा च दक्षः ।
"अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्ज्जितः ।
सा च सन्ध्या समाख्याता मुनिभिस्तत्त्ववादिभिः ॥"
सूर्य्यनक्षत्रवर्ज्जितः । अर्द्धास्तमितादीरितस्वर्य्यमण्डलप्रकृतेर्णोनक्षत्रवर्ज्जितः । तथा च वराहः ।
"अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत् ।
तेजःपरिहानिमुखा भानोरर्द्धोदयं यावत् ॥"
अत्र आद्यन्तता उक्ता । परिमाणमाह दक्षः ।
"रात्र्यन्तकाले नाड्यौ द्वे सन्ध्यादिः काल उच्यते ।
दर्शनादर्कविरेखायास्तदन्तो मुनिभिः स्मृतः ॥"
नाडीद्वयः । योगी याज्ञवल्क्यः ।
"ह्रासवृद्धी च सततं दिनरात्र्योर्यथाक्रमम् ।
सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ समा स्मृता ॥"
अत्रोपासनाया अपि सन्ध्यात्वमाह व्यासः ।
"उपास्ते सन्धिवेलायां निशाया दिवसस्य च ।
तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः ॥"
उपास्ते ध्यानप्राणायामादिक्रियेति यावत् ॥ ※ ॥ तत्काले उपास्या अपि देवता सन्ध्या । तथा च याज्ञवल्क्यः ।
"सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ ॥"
उपासनोपक्रममाह संवर्त्तः ।
"प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम् ॥"
सनक्षत्रामित्यनेन तद्युक्तकाले उपक्रम्य प्रातःसन्ध्यामुपासीत । एवमेवार्द्धास्तमितभास्करामिति पश्चिमां सादित्यामित्यनेन तद्युक्तकाले उपक्रम्य उपासीतेत्यर्थः ॥ ८ ॥ मध्याह्नसन्ध्याया अष्टमुहूर्त्तं कालमाह स्मृतिः ॥
"पूर्व्वापरे तथा सन्ध्ये सनक्षत्रे प्रकीर्त्तिते ।
समस्थेऽपि मध्याह्ने मुहूर्त्तसप्तमोपरि ॥"
सांख्यायनगृह्यम् । अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदिग्भागमन्दर्शनात् । अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनादि जपन् एवं प्रातः प्राङ्मुखस्तिष्ठन् आमण्डलदर्शनादिति । उत्तरापराभिमुखो वायुकोणाभिमुखः । कोणं विमृशेति अन्वष्टमदिशमिति । उभयदिगष्टमभागमिति यावत् । व्यासः ।
"गायत्त्री नाम पूर्व्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ॥
प्रतिग्रहान्न दोषाच्च पातकादुपपातकात् ।
गायत्त्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः ॥
सवितृद्योतनात् सैव सावित्री परिकीर्त्तिता ।
जगतः प्रसवित्रीत्वात् वाग्रूपत्वात् सरस्वती ॥"
तैत्तिरीयब्राह्मणम् । उद्यन्तमस्तं यान्तं आदित्यमभिध्यायन् कुर्व्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते । असावादित्यो ब्रह्मा इति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेदेत्ययमर्थः । वक्ष्यमाणप्रकारेण प्राणायामादिकं कुर्व्वन् यथोक्तनामरूपोपेतं सन्ध्याशब्दस्य वाच्यमादित्यं ब्रह्मेति ध्यायन् ऐहिकमामुत्रिकञ्च सकलभद्रमश्नुते । य एवमुक्तध्यानेन शुद्धान्तःकरणो ब्रह्मज्ञानात् कुरुते स पूर्व्वमपि ब्रह्मैव सन् प्रज्ञावान् चिरजीवित्वं प्राप्तो यथोक्तज्ञानेनाज्ञानोपशमे ब्रह्मैव प्राप्नोति । इति पराशरभाष्ये माधवाचार्य्यः ॥
अतएव व्यासः ।
"न भिन्नां प्रतिपद्येत गायत्त्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित् ॥" ※ ॥
गायत्त्रीस्थभर्गपदप्रतिपाद्य ईश्वरः । अहं जीवरूपोऽस्मि भवामि इति । अजहत्स्वार्थलक्षणया जीवेश्वरयोरहङ्कारप्रतिफलितत्वोपाधिरहितेन चिद्रूपेणैक्यम् । घटाकाशमहाकाशयोरुपाधिरित्यवगमात् । ऐक्यमिव भावयन् उपासीत । याज्ञवल्क्योऽपि ।
"या सन्ध्या सा तु गायत्त्री द्विधा भूत्वा प्रतिष्ठिता ।
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः ॥" ※ ॥
उपासनायाः फलमाह स एव ।
"गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
निःसृतं कर्म्मसंयुक्तं पुनस्तासां तदौषधम् ॥
एवं स हि शरीरस्थः सर्पिर्व्वत् परमेश्वरः ।
विना चोपासनादेव न करोति हितं नृषु ॥
प्रणवव्याहृतिभ्याञ्च गायत्त्र्या त्रितयेन च ।
उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः ॥"
त्रितयेन प्रणवादित्रितयेन ब्रह्मप्रतिपादकेनोच्चारितेन तदर्थावगमेन उपास्यं प्रसादनीयम् । तदाह स एव ।
"वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।
वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति ॥
भूर्भुवःस्वस्तथा पूर्व्वं स्वयमेव स्वयम्भुवा ।
व्याहृता ज्ञानदेहेन तस्मात् व्याहृतयः स्मृताः ॥"
ज्ञानदेहेन तत्त्वज्ञानस्य चिद्रूपेश्वरस्य देहेव शरीररूपेण व्याहृता उक्ताः । तेन तद्व्याप्योऽपीश्वरः । कूर्म्मपुराणम् ।
"प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः ॥"
एतद्रूपेणापि भावनीयाः । इत्याह्निकाचारतत्त्वम् ॥ ※ ॥ अपि च ।
"दिनान्तसन्ध्यां सूर्य्येण पूर्व्वामृक्षैर्युतां बुधः ।
उपतिष्ठेत् यथान्यायं सम्यगाचम्य पार्थिव ॥
सर्व्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥
सूर्य्येणाभ्युदितो यस्तु त्यक्तः सूर्य्येण यः स्वपन् ।
अन्यत्रातुरभावाच्च प्रायश्चित्तीयते नरः ॥
तस्मादनुदिते सूर्य्ये समुत्थाय महीपते ।
उपतिष्ठेन्नरः सन्ध्यां सस्यार्च्य दिनान्तजाम् ॥
उपतिष्ठन्ति वै सन्ध्यां ये न पूर्व्वां न पश्चिमाम् ।
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप ॥"
इति विष्णुपुराणे ३ अंशे ११ अध्यायः ॥ ※ ॥
दीक्षितविशेषस्य सन्ध्याविशेषा यथा,—

भूमिरुवाच ।

"देवदेव कथं सन्ध्यां दीक्षितः कुरुते वद ।
केन मन्त्रेण या भक्तस्तव कर्म्मपरायणः ॥

त्रयाणामपि दोषाणां तस्य रूपाणि लक्षयेत् ॥
व्याधिभ्यो दारुणश्चैव वज्राग्न्यशनिसन्निभः ।
केवलोच्छ्वासपरमस्तब्धाङ्गस्तब्धलोचनः ॥
त्रिरात्रोपरमे तस्य जन्तोर्हरति जीवितम् ।
तदवस्थन्तु तं दृष्ट्वा मूढो व्याहरते जनः ॥
धर्षितो राक्षसैर्नूनमवेलायां चरन्ति ये ।
अन्यया ब्रुवते केचित् यक्षिण्या ब्रह्मराक्षसैः ॥
पिशाचैर्गुह्यकैश्चैव तथान्यैर्मस्तके हतम् ।
कुलदेवार्च्चनाहीनं धर्षितं कुलदेवतैः ॥
नक्षत्रपीड़ामपरे गरकर्म्मेति चापरे ।
सन्निपातमिमं प्राहुर्भिषजः कूटपाकलम् ॥”७॥
अथ प्रवृद्धमध्यहीनवातादिजनितसन्निपातज्वराणां लक्षणान्याह ।
“प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
प्रलापायाससम्मोहकम्पमूर्च्छारतिभ्रमाः ।
एकपक्षाभिघातश्च तत्राप्येतद्विशेषतः ।
एष सम्मोहको नाम्ना सन्निपातः सुदारुणः ॥”
रोगास्त एवोक्ता उक्ता एव ते रोगाः यथा-वेपथुनिद्रानाशविजृम्भादयो वातजाः । दाहतृष्णोष्णता स्वेदादयः पित्तजाः । गौरवाग्निमान्द्योत्क्लेशिका मुखप्रसेकादयः कफजाः । तत्रापि प्रलापादयः पक्षाघातान्ता विशेषाद्भवन्ति ॥ ८ ॥ ननु वातः प्रवृद्धः सन् ज्वरं करिष्यति पित्तन्तु मध्यं समर्मामिति यावत् तत् कथं ज्वरं करिष्यति । यत आह ।
“धातवस्तन्मला दोषा नाशयन्त्यसमास्तनुम् ।
समाः सुखाय विज्ञेया बलायोपचयाय च ॥”
इति ।
उच्यते । अत्र पित्तं मध्यमपि अप्रकृतमेव यतोऽप्रकृतयोर्वातश्लेष्मणोरपेक्षया मध्यं तेन मध्यं मध्यकुपितमित्यर्थः ॥ ८ ॥ ननु कफः क्षीणः स कथं ज्वरं करिष्यति हीनशक्तिकत्वात् । उच्यते । दोषाः क्षीणा अपि व्याधीन् कुर्वन्त्येव । यत आह ।
“वातक्षयेऽल्पचेष्टत्वं मन्दवाक्त्वं विसंज्ञता ।
पित्तक्षयेऽधिकश्लेष्मा वह्निर्मन्दः प्रभाक्षयः ॥
शिथिलाः सन्धयो मूर्च्छा रौक्ष्यं दाहो कफ-क्षयः ॥”
इत्याशङ्का सिद्धान्तश्चापरत्रापि ॥ ८ ॥ ॐ ॥
“मध्यप्रवृद्धहीनैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
मोहप्रलापमूर्च्छाः स्युर्मन्यास्तम्भः शिरोग्रहः ।
कासः श्वासो भ्रमस्तन्द्रा संज्ञानाशो हृदिग्रहः ॥
स्रोतोभ्यो रक्तं विसृजति तन्द्रा स्यात् स्तब्धनेत्रता ।
तत्राप्येते विशेषाः स्युर्मृत्युरस्याक् त्रिवासरात् ।
भिषग्भिः सन्निपातोऽयं कथितः पाकलाभिधः ॥ ६ ॥
हीनप्रवृद्धमध्यैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसाः ।
पच्यन्तेऽत्यर्थदुष्टाश्च पूयशोणितनिर्गमः ॥
शीर्णदन्तस्य मृत्युश्च तत्राप्येतद्विशेषतः ।
भिषग्भिः सन्निपातोऽयं याम्यनामा प्रकीर्त्तितः ॥” १० ॥ ॐ ॥
अथ प्रवृद्धवातमध्यपित्तहीनकफस्य सन्निपातस्य लक्षणमाह ।
“प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
प्रलापायाससम्मोहकम्पमूर्च्छारतिभ्रमाः ।
मन्यास्तम्भश्च मृत्युश्च तत्राप्येतद्विशेषतः ।
उक्तः क्रकचनामायं सन्निपातो भिषग्वरैः ॥ ११ ॥ ॐ ॥
मध्यहीनप्रवृद्धैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्तथैवोक्ता यथादोषबलाश्रयाः ॥
अन्तर्दाहो विशेषोऽत्र न च वक्तुं स शक्यते ।
रक्तमालक्तकेनेव लक्ष्यते मुखमण्डलम् ॥
यत्नेनाकर्षितः श्लेष्मा हृदयान्न प्रसिच्यते ।
इषुणेवाहतं पार्श्वं तुदन्ते खन्यते हृदि ॥
प्रमीलकश्वासहिक्का वर्द्धते तु दिने दिने ।
जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः ॥
विसर्गं नाभिजानाति कूलेनापि कपोतवत् ।
अतीवश्लेष्मणा पूर्णः शुष्कवक्त्रोष्ठतालुकः ॥
तन्द्रानिद्रातियोगार्त्तो हतवाग्हततद्युतिः ।
न चातिलभते शर्म्माणि विपरीतानि चेच्छति ॥
आयम्यते च बहुशो रक्तं ष्ठीवति चाप्यधः ।
एष कार्कटको नाम्ना सन्निपातः सुदारुणः ॥ १२ ॥ ॐ ॥
हीनमध्यप्रवृद्धैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
पार्श्वं शूलं कटीतोदो मध्यो दाहो तृषा भ्रमः ।
भृशं क्लमः शिरो वक्षमन्या हृदयवायुजः ॥
प्रमीलकश्वासहिक्काकासचाथविसंज्ञताः ।
प्रथमोत्पन्नमेतत्तु साधयन्ति कदाचन ॥
एतस्मिन् सन्निवृत्ते तु कर्णमूले सुदारुणा ।
पिड़का जायते जन्तोर्यया कृच्छ्रेण जीवति ॥
स वैदारिकसंज्ञोऽयं सन्निपातः सुदारुणः ।
त्रिरात्रोपरमे तस्य वर्षमौषधकल्पनम् ॥”१३॥
अथ तन्त्रान्तरे । वातोल्बणादीनां सन्निपातज्वरविशेषाणां त्रयोदशानां शीताङ्गादीनि त्रयोदश नामान्तराणि लक्षणान्तराणि चाह ।
“शीताङ्गस्तिमलोद्भवज्वरगणो तन्द्री प्रलापी ततो रक्तष्ठीवयिता च तत्र गणितः सम्भुग्ननेत्रस्तथा । साभिन्यासकजिह्वकश्च कथितः प्राक्सन्धिगोऽथान्तको रुग्दाहः सहचित्तविभ्रम इह द्वौ कर्णकण्ठग्रहौ ॥”
तन्द्री तन्द्रिकः । प्रलापी प्रलापकः । रक्तष्ठीवयिता रक्तष्ठीवी । सम्भुग्ननेत्रो भुग्ननेत्रः । अभिन्यासकः अभिन्यासः । कर्णकण्ठग्रहौ कर्णग्रहः कर्णकः । कण्ठग्रहः कण्ठकुब्जकः ॥ ॐ ॥
अथ तेषां प्रत्येकलक्षणानि ।
“हिमशिशिरशरीरः सन्निपातज्वरो यः श्वसनकसनहिक्कामोहकम्पप्रलापैः ।
क्लमबहुकफतान्तर्दाहवम्यङ्गपीड़ाखरविकृतिभिरार्त्तः शीतगात्रः स उक्तः ॥१॥
तन्द्रातीव ततस्तृषातिसरणं श्वासोऽधिकः कासरुक् सन्तप्तातितनुर्गले श्वयथुना वाहेषु कण्डूः कफः ।
सुश्यामा रसना क्लमः श्रवणयोर्मान्द्यञ्च दाहस्तथा यत्र स्यात् स हि तन्द्रिको निगदितो दोषत्रयोत्थो ज्वरः ॥ २ ॥
यत्र ज्वरे निखिलदोषनिताम्तदोषजाते प्रलापबहुला सहसोत्थिताश्च ।
कम्पव्यथापतनदाहविसंज्ञताः स्युर्न्नाम्ना प्रलापक इति प्रथितः पृथिव्याम् ॥३॥
निष्ठीवो रुधिरस्य रक्तसदृशं छायां तनौ मण्डलं लौहित्यं नयने तृषारुचिवमिश्वासातिसारभ्रमाः ।
आध्मानञ्च विसंज्ञता च पतनं हिक्काङ्गपीड़ा भृशं रक्तष्ठीविनि सन्निपातजनिते लिङ्गं ज्वरे जायते ॥ ४ ॥
भृशं नयनरक्तताश्वसनकासतन्द्राभ्रमाः प्रलापमदवेपथुश्रवणहानिमोहास्तथा ।
यदी निखिलदोषजे भवति यत्र लिङ्गं ज्वरे पुरातनचिकित्सकैः स इह भुग्ननेत्रो मतः ॥ ५ ॥
दोषाश्चोल्बणतरा भवन्ति बलिनः सर्व्वेऽपि यत्र ज्वरे मोहोऽतीव विचेष्टता विकलता श्वासो भृशं मूकता ।
दाहश्चिक्कणमाननञ्च दहनो मन्दो बलस्य क्षयः सोऽभिन्यास इति प्रकीर्त्तित इह प्राचीनभिषग्भिः पुरा ॥ ६ ॥
त्रिदोषजनिते ज्वरे भवति यत्र जिह्वा भृशं हता कठिनकण्टकैसदृश्ग मूकता मूढता ।
श्रुतिघातबलक्षती श्वसनकासतन्द्रायः पुरातनभिषग्वरास्तमिह जिह्वकं चक्षते ॥७॥
यथातिशयिता भवेच्छ्वयथुसंयुता सन्धिषु प्रभूतकफता मुखे विगतनिद्रता कासरुक् ।
स सन्धिगमिति कीर्त्तितं भवति लक्ष्म यत्र ज्वरे त्रिदोषजनिते बुधैः स हि निगद्यते सन्धिगः॥८॥
यस्मिन् लक्षणमेतदस्ति सकलैर्दोषैरुदीते ज्वरेऽजस्रं मूर्द्धविधूननं सकसनं सर्व्वाङ्गपीड़ाधिका ।
हिक्काश्वाससदाहमोहसहिता देहेऽतिसन्तप्तता वैकल्यञ्च तथावचांसि सुधिभिः सङ्कीर्त्तितः सोऽन्तकः ॥ ६ ॥
दाहोऽधिको भवति यत्र तृषा च तीव्रा श्वासप्रलापविरुचिभ्रममोहपीड़ाः ।
मन्या हनुग्रहनकण्ठरुजा भ्रमाश्च रुग्दाहसंज्ञ उदितस्त्रिभवो ज्वरोऽयम् ॥ १० ॥
गायति नृत्यति हसति प्रलपति विकृतं निरीक्षते सततम् ।
दाहव्यथाभयार्त्तो दोषत्रयचित्तविभ्रमो ज्वरवान् ॥ ११ ॥

निःशेषदोषजनितज्वरशोथजन्मा
स्यात् कर्णमूलविषये श्वयथुर्यथा च ।
कण्ठग्रहो बधिरताश्वसनप्रलाप-
प्रस्वेदमोहदहनानि च कर्णकाख्ये ॥ १२ ॥
कण्ठः शूकशतावरुद्धवदनिश्वासः प्रलापोऽरुचि-
र्दाहो देहरुजा तृषापि च हनुस्तम्भः शिरो-
ऽर्त्तिस्तथा ।
मोहो वेपथुना सहेति सकलं लिङ्गं त्रिदोषज्वरे
यत्र स्यात् स हि कण्ठकुब्ज उदितः प्राज्ञै-
श्चिकित्सावुधैः ॥ १३ ॥ * ॥
सन्धिगस्तेषु साध्यः स्यात्तन्द्रिकश्चित्तविभ्रमः ।
कर्णको जिह्वकः कण्ठकुब्जः पञ्चापि कष्टकाः ॥
रुग्दाहस्तलिकश्चैव संसाध्यस्तेषु भाषितः ।
रक्तष्ठीवी भुग्ननेत्रः शीतगात्रः प्रलापकः ।
अभिन्यासोऽन्तकस्त्वेते षडसाध्याः प्रकी-
र्त्तिताः ॥”*॥
अथ तन्त्रान्तरे । वातोल्वणादीनां सन्निपात-
ज्वरविशेषाणां त्रयोदशानां कुम्भीपाकादीनि
त्रयोदश नामान्तराणि लक्षणान्तराणि चाह ।
“कुम्भीपाकः प्रोर्णुनावः प्रलापी
ह्यन्तर्दाही दण्डपातोऽन्तकश्च ।
एणीदाहश्चाथ हारिद्रसंज्ञो
भेदा एते सन्निपातज्वरस्य ॥
अजघोषभूतहासौ यन्त्रापीडश्च संन्यासः ।
संशोषी च विशेषास्तस्यैवोक्तास्त्रयोदश च ॥”
एतेषां लक्षणानि ।
“घोणाविवरभरद्बहुशोणासितनीललोहितं
सार्द्रम् ।
धमुदन् मस्तकमखिलः कुम्भीपाकेन पीड़ितं
विद्यात् ॥
उत्क्षिप्य यः स्वमङ्गं क्षिपत्यधस्ताच्चितान्त-
रुच्छ्वसिति ।
तं प्रोर्णुनावजुष्टं विषमकष्टं विजानीयात् ॥
स्वेदभ्रमाङ्गपीड़ा कम्पो दवथुर्वमी व्यथा कण्ठे ।
गात्रञ्च गुर्व्वतीदं प्रलापजुष्टस्य जायते
लिङ्गम् ॥
अन्तर्दाहः शैत्यं बहिश्च यस्या विशेषतः श्वासः ।
अङ्गमिव दग्धकल्पं सोऽन्तर्दाहार्द्दितः कथितः ॥
नक्तं दिवा न निद्रामुपैति गृह्णाति मूढ़चीनभसः ।
उत्थाय दण्डपाते भ्रमातुरः सर्व्वतो भ्रमति ॥”
नभसो गृह्णाति आकाशात् किञ्चिद्ग्रहीतुं
करौ प्रसारयति इत्यर्थः ।
“संपूर्य्यते शरीरं ग्रन्थिभिरभितस्तथोदरं
मरुता ।
श्वासातुरस्य सततं विचेतनस्यान्तकार्त्तस्य ॥
परिधावतीव गात्रे दहयाने मूर्च्छनपरा-
हारियाणा;
वेपथुमतः सदाङ्गस्यैणीदाहज्वरार्त्तस्य ॥”
दह्यमाने पीड़ाभाजने । गात्रस्य विशेषणमेतत्
“यस्यातिपीतमङ्गनयने मूत्रामलं ततोऽप्य-
धिकम् ।
दाहोऽतिशीतता च हरिद्रस्य स हारिद्रको ज्ञेयः ॥
छागलकशरीरगन्धः स्कन्धरुजावाग्निरुद्धगल-
रन्ध्रः ।
अजघोषसन्निपातादातान्नाचः पुमान् भवति ॥
शब्दादीनधिगच्छति न स्वान्विषयान् यदी-
न्द्रियग्रामः ।
हसति प्रलपति परुषं स ज्ञेयो भूतहासार्त्तः ॥
येन मुहुर्ज्वरवेगाद्यन्त्रेणेवावपीड्यते गात्रम् ।
रक्तं पीतञ्च वमेत् यन्त्रापीड़ः स विज्ञेयः ॥
अतिसरति वमति कूजति गात्राण्यभितश्चिरं
नरः क्षिपति ।
स न्यासुसन्निपाते प्रलपति शुष्काक्षिमण्डलो
भवति ॥
मेचकवपुरतिमेचकलोचनयुगलोऽवलो मलोत्-
सर्गात् ।
संशोषिणि सितपिड़कामण्डलयुक्तो ज्वरे भवति ॥
नारायण एव भिषग्भेषजमेतेषु जाह्नवीनीरम् ।
वैद्यश्चैतुरेको नित्यं मृत्युञ्जयोऽध्येयः ॥”*॥
अथासाध्यसन्निपातज्वरस्य लक्षणमाह ।
“सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥”
सुदारुणः मारकत्वात् यतस्तेन शोथेन कश्चि-
देव प्रमुच्यते । कोऽपि जीवितं लभते इत्यर्थः ।
“सन्निपातज्वरान् कष्टानसाध्यानपरे जगुः ।
दोषे विबद्धे नष्टेऽग्नौ सर्व्वसम्पूर्णलक्षणः ।
सन्निपातज्वरोऽसाध्यः कष्टसाध्यस्ततोऽन्यथा ॥”
दोषे पित्तकफे । विबद्धे अपक्वे सर्व्वसम्पूर्ण-
लक्षणः सर्व्वाणि दाहशीतादीनि सम्पूर्णानि
अन्यूनानि प्रौढ़ानीति यावत् लक्षणानि यस्य
सः । ततोऽन्यथा दोषे पक्वे अग्नौ दीप्ते स्वल्प-
लक्षणकः कष्टसाध्य इत्यर्थः ॥ * ॥ * ॥
अथ सामान्यसन्निपातज्वरस्य चिकित्सा ।
“सन्निपातार्णवे मग्नं योऽभ्युद्धरति मानवम् ।
कस्तेन न कृतो धर्म्मः काच पूजा न योऽर्हति ॥
मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता ।
यश्च तत्र भवेज्जेता स जेतामयसङ्कुले ॥
श्लेष्मनिग्रहमेवादौ कुर्य्याद्दाधौ त्रिदोषजे ।
निरस्ते श्लेष्मणि ह्यस्य स्रोतःस्वुद्घाटितेषु च ।
लाघवं जायते सद्यस्तृष्णा चैवोपशाम्यति ॥”*॥
भेड़ोऽप्याह ।
“सन्निपातज्वरे पूर्व्वं कुर्य्यादामकफापहम् ।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ ॥”
इति ॥ * ॥
ननु तन्त्रान्तरे प्रथमं पित्तस्य प्रतिक्रिया प्रोक्ता ।
यथा,—
“शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु ।
दुर्निवारतरं तद्धि ज्वरार्त्तेषु विशेषतः ॥” इति ।
अन्यत्रापि ।
“समवाये त्रिदोषाणां पूर्व्वं पित्तमुपाचरेत् ।
ज्वरे चैवातिसारे च सर्व्वत्रान्यत्र मारुतः ॥”
इति ॥
तन्त्रान्तरे प्रथमं वायोः प्रतिक्रिया प्रोक्ता ।
यथा,—
“वातस्यानुजयेत् पित्तं पित्तस्यानुजयेत् कफम् ।”
इति ॥
तत्र व्यवस्थामाह तन्त्रान्तरे ।
“ज्वरे त्रिदोषजे सामे शमयेत् प्रथमं कफम् ।
जीर्य्यत्यामे जयेत् पित्तं निरामे त्वनिलं जयेत् ॥”
इति । प्रथममिति स्थानत्रयेऽपि सम्बध्यते ।
अन्ये त्विति समादधते ।
“त्रयाणां वा जयेत् पूर्व्वं तं यः स्याद्बलवत्तरः ।”
इति ।
तथा च ।
“संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत् ।
शेषदोषाविरोधेन सन्निपाते तथैव च ॥” इति ॥
संसर्गे दोषद्वयसंसर्गे । गरीयान् बलवत्तरः ।
“अंशांशं यत्र दोषाणां विवेक्तुं नैव शक्नुयात् ।
क्रियां साधारणीं तत्र विदधीत चिकित्सकः ॥
लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्यं त्रिदोषजे ॥”
ज्वर इति शेषः ॥*॥ ननु ।
“क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः ॥”
इति वचनेन क्रियासङ्करस्य निषिद्धत्वात् कथ-
मत्र नस्यनिष्ठीवनावलेहाञ्जनानि युगपद्विधी-
यन्ते इत्याशङ्कायामाह ।
“क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते ।
भिन्नरूपतयैतास्तु नहि कुर्व्वन्ति दूषणम् ॥”*॥
तत्र लङ्घनस्य अवधिमाह ।
“त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
लङ्घनं सन्निपातेषु कुर्य्याद्वारोग्यदर्शनात् ॥”
लङ्घने त्रिरात्रादिविकल्प उल्वणवाताद्यपेक्षया ।
दोषाणां शीघ्रमध्यमन्दशक्तिकत्वात् व्याधिस्वभा-
वाच्च । आरोग्यदर्शनात् इति यावद्रोगता-
दर्शनं स्यात्तावद्वा लङ्घनं कुर्य्यात् । एतेन
त्रिरात्राद्यवधेरनियतत्वं सूचितम् । अतएव
सुश्रुतः प्राह ।
“सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥”
घोरतर इति घोरः स्वभावादेव तदा घोरतरो
भूत्वेति ॥ * ॥ हननप्रशमनयोः कारणमाह ।
“पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ता-
हात् ।
हन्ति विमुञ्चत्यथवा त्रिदोषजो धातुमलपा-
कात् ॥”
त्रिदोषजो ज्वर इति शेषः । धातुमलपाकात्
धातुपाकाद्धन्ति मलपाकाद्विमुञ्चतीत्यर्थः ।
धातुमलपाके प्राक्तनकर्म्मैव हेतुः । तत्र यदि
जीवनसंवर्द्धकं कर्म्मास्ति तदा मलपाकोऽन्यथा
धातुपाकः । स च रसादिशुक्रान्तधातूनां पाको
बोद्धव्यः ॥*॥ तत्र धातुपाकस्य लक्षणमाह ।
“निद्रानाशो हृदि स्तम्भो विष्टम्भो गौरवा-
रुची ।
अरतिर्बलहानिश्च धातूनां पाकलक्षणम् ॥”
विष्टम्भ उदरस्य । गौरवं गात्राणाम् । अन्यच्च ।

पिङ्गं चन्दनं पत्रं प्रियङ्गु ध्यामकं तथा ।
हरिद्रे द्वे बृहत्यौ च सारिवे च स्थिरासहा ॥
कल्कैरेभिर्घृतं सिद्धमजेयमिति विश्रुतम् ।
विषाणि हन्ति सर्व्वाणि शीघ्रमेवाजितं क्वचित् ॥
दूषीविषार्त्तं सुस्विन्नमूर्द्धं चाधश्च शोधितम् ।
पाययेतागदं नित्यमिमं दूषीविषापहम् ॥
पिप्पल्यो ध्यामकं मांसी शावरः परिपेलवम् ।
सुवर्च्चिका सूक्ष्मैला तोयं कनकगैरिकम् ॥
क्षौद्रयुक्तोऽगदो ह्येष दूषीविषमपोहति ।
नाम्ना दूषीविषारिस्तु न चान्यत्रापि वार्य्यते ॥
ज्वरे दाहे च हिक्कायामानाहे शुक्रसंक्षये ।
शोथेऽतिसारे मूर्च्छायां हृद्रोगे जठरेऽपि वा ॥
उन्मादे वेपथौ चैव ये चान्ये स्युरुपद्रवाः ।
यथास्वं तेषु कुर्व्वीत विषघ्नैरौषधैः क्रियाम् ॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ।
दूषीविषमसाध्यन्तु क्षीणस्याहितसेविनः ॥"
इति सुश्रुते कल्पस्थाने २ अध्यायः ॥)

स्थावरादि, क्ली, ( स्थावरं आदिः कारणं यस्य ।) वत्सनाभविषम् । इति राजनिर्घण्टः ॥

स्थाविरं, क्ली, (स्थविरस्य भावः कर्म्म वा । स्थविर + "हायनान्तयुवादिभ्योऽण् ।" ५ । १ । १३० । इत्यण् । ) स्थविरत्वम् । वृद्धत्वम् । इत्यमरः । २ । ६ । ४० ॥ (यथा, महाभारते ।२।६६।३।
"गार्हस्थ्येऽप्यथवा बाल्ये यौवने स्थाविरेऽपि वा ।
यथाफलं समश्नाति तथा त्वं कथयस्व मे ॥")
तत्तु सप्ततिवर्षात् परम् । यथा,—
"आ षोड़शाद्भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धः स्यात् सप्ततेरूर्द्धं वर्षीयान् नवतेः परम् ॥"
इति भरतधृतस्मृतिवचनम् ॥

स्थायकः, पुं, चार्थिवम् । इत्यमरः । ३।६।१२२ ॥ जलार्द्रेन्दुमुदम् । इति मेदिनी ॥

स्थासु, क्ली, शारीरबलम् । स्थाधातोः सुप्रत्ययेन निष्पन्नम् । इति केचित् ॥

स्थास्नुः, त्रि, ( तिष्ठतीति । स्था + "ग्लाजिस्थश्च ग्स्नुः ।" ३।२।१३९ । इति ग्स्नुः । ) स्थिरतरः । इत्यमरः । ३।१।७३ ॥ (यथा, भट्टिः । २ । ४० ।
"स्थिरयत्नो शासकतेव जङ्गमा
स्फुरा दिव स्थास्नुरिवाचिरप्रभा ।
द्वयाङ्गनाभिरधिदेवताद्युतिः
सुता ददे तस्य सुताय मैथिली ॥")
स्थावरः । इति भरतः ॥ (यथा, किराते ।४।१८।
"अभिमानधनस्य गत्वरै-
रसुभिः स्थास्नु यश्चिचीषतः ।
अचिरांशुविलासचञ्चला
ननु लक्ष्मीः फलमानुषङ्गिकम् ॥")
स्थावरः । इति श्रीभागवतटीकायां श्रीधर-स्वामी । ८ । ६ । ३० ॥ ( यथा, मनुः ।१।५६।
"यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च ।
समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति ॥")

स्थिकः, पुं, स्फिग्देशः । यथा, शब्दरत्नावल्याम् ।
"कटिप्रोथः कटिः प्रोथः स्फिक् स्फिचः स्थिकौ
स्फिचौ ॥"

स्थितः, त्रि, ( स्था + क्तः । ) प्रतिज्ञातवान् । ( यथा, हरिवंशे । २५५ । ६५ ।
"शचीन्द्रवचनं श्रुत्वा दानवेन्द्रोऽब्रवीदिदम् ।
स्थितोऽस्मि समये तस्य अनन्तस्य महात्मनः ॥")
ऊर्द्ध्वः । निश्चलः । इति मेदिनी ॥ ( वर्त्तमानः । गतिनिवृत्तिविशिष्टः । यथा, रघुः । २ । ६ ।
"स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥")
क्ली, स्था + भावे क्तः । अवस्थानम् । कुल-मर्य्यादा । यथा, रामायणे । २ । ३९ । २४ ।
"साध्वीनान्तु स्थितानान्तु शीले सत्ये श्रुते स्थिते ।
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥")

स्थितप्रज्ञः, त्रि, ( स्थिता प्रतिष्ठिता आत्मा-नात्मविवेकजा प्रज्ञा यस्य । ) मनोगतसर्व्व-वासनारहितः । यथा, श्रीभगवद्गीतायाम् २ । ५५—५६ ।
"प्रजहाति यदा कामान् सर्व्वान् पार्थ ! मनो-गतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥"

स्थितप्रेमा, [न्] पुं, (स्थितं प्रेम यस्य ।) स्थिरतर-बन्धुः । इति केचित् ॥

स्थितिः, स्त्री, ( स्था + क्तिन् । ) न्याय्यपथस्थितिः । तत्पर्य्यायः । संस्था २ मर्य्यादा ३ धारणा ४ । इति क्षत्रियवर्गे अमरः । २ । ८ । २६ ॥ संस्थितिः ५ । इति शब्दरत्नावली ॥ ( यथा, कुमारे । १ । १८ ।
"स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥")
अवस्थानम् । तत्पर्य्यायः । आस्था २ आसना ३ । इति वैश्यवर्गे अमरः । ३ । २ । २१ ॥ ( यथा, रघुः । १ । ८९ ।
"प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थिति-
माचरेः ॥")
सीमा । इति मेदिनी ॥ ७ ॥ (नियमः । यथा, महाभारते । ३ । १९१ । २० ।
"एषः कपोतमत्तोति स्थितिरेषा सनातनी ।
मा राजन् सारमज्ञात्वा यद्धीनमनुपालयः ॥")
व्रतविशेषे स्थितिनिषेधो यथा,—
"नातिप्रकाशवाचानि न केशान् वा कथञ्चन ।
तुषाङ्गारकपालानामधितिष्ठेत् कदाचन ॥"
इति कौर्म्मे उपविभागे । १६ । ७९ ॥

स्थिरः, पुं, ( तिष्ठतीति । स्था + "अजिरशिशिरे-ति ।" उणा० १ । ५४ । इति किरच्प्रत्ययेन साधुः । ) देवः । पर्व्वतः । कार्त्तिकेयः । वृषः । इति शब्दरत्नावली ॥ शनिः । मोक्षः । इति मेदिनी ॥ धनञ्जयः । इति राजनिर्घण्टः ॥ धवन्नृक्षः । इति भावप्रकाशः ॥ वृषसिंहवृश्चिक-कुम्भराशयः । यथा,—
"क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥"
इति ज्योतिस्तत्त्वम् ॥
तत्र जातफलं यथा,—
"अस्थिरविभूतिमित्रं जलमटनं स्खलितनियम-मपि चरभे ।
स्थिरभे तद्विपरीतं क्षेमान्वितं दीर्घसूत्रञ्च ॥
द्विशरीरे त्यागयुक्तं कृतज्ञमुत्साहिनं विविध-चेष्टम् ॥"
इति दीपिका ॥ * ॥
स्थिरवस्तूनि यथा । युद्धे प्रधानभटः १ साध्वी २ धर्म्मः ३ अधर्म्मः ४ सज्जनः ५ । अस्थिरवस्तूनि यथा । नवका १ दोला २ अपाङ्गः ३ यौवनम् ४ दुर्ज्जनः ५ स्वामिप्रसादः ६ हस्तिकर्णः ७ स्वर्णम् ८ मत्स्यः ९ कपिः १० श्रीः ११ । इति कविकल्पलता ॥

स्थिरः, त्रि, (स्था + किरच् ।) कठिनः । निश्चलः । इति धरणिः । यथा,—
"अभ्रच्छाया खले प्रीतिः परनारीषु सङ्गतिः ।
पञ्चैते ह्यस्थिरा भावा यौवनानि धनानि च ॥
अस्थिरं जीवितं लोके अस्थिरं धनयौवनम् ।
अस्थिरं पुत्रदाराद्यं धर्म्मः कीर्त्तिर्यशः स्थिरम् ॥"
इति गारुडे । ११५ । २५—२६ ॥

स्थिरगन्धः, पुं, (स्थिरो गन्धो यस्य ।) चम्पकवृक्षः । इति राजनिर्घण्टः ॥ चिरस्थायिसौरभयुक्ते, त्रि ॥

स्थिरगन्धा, स्त्री, (स्थिरो गन्धो यस्याः ।) पाटला । केतकी । इति राजनिर्घण्टः ॥

स्थिरचक्रः, पुं, (स्थिरं चक्रं यस्य ।) जिनविशेषः । तत्पर्य्यायः । मञ्जुश्रीः २ ज्ञानदर्पणः ३ मञ्जु-भद्रः ४ मञ्जुघोषः ५ कुमारः ६ अष्टारचक्रवान् ७ वज्रधरः ८ प्रज्ञाकायः ९ वादिराट् १० नीलोत्-पली ११ महाराजः १२ नीलः १३ शार्दूल-वाहनः १४ धियाम्पतिः १५ पूर्व्वजिनः १६ खड्गी १७ दण्डी १८ विभूषणः १९ बाल-व्रतः २० पञ्चचीरः २१ सिंहकेलिः २२ शिखा-धरः २३ वागीश्वरः २४ । इति त्रिकाण्डशेषः ॥

स्थिरच्छदः, पुं, (स्थिराश्छदा यस्य ।) भूर्ज्जपत्रः । इति रत्नमाला ॥

स्थिरच्छायः, पुं, (स्थिरा निश्चला छाया यस्य ।) वृक्षमात्रम् । इति शब्दमाला ॥ छायातरुः । इति त्रिकाण्डशेषः ॥ (निश्चलच्छायायुक्ते, त्रि । यथा, महानिर्व्वाणे । १ । ३ ।
"स्थिरच्छायद्रुमच्छायाच्छादिते विहगाकुले ॥")

स्थिरजिह्वः, पुं, ( स्थिरा जिह्वा यस्य । ) मत्स्यः । इति हेमचन्द्रः ॥

स्थिरजीविता, स्त्री, (स्थिरं बहुकालस्थायि जीवितं यस्याः । ) शाल्मलिवृक्षः । इति शब्दमाला ॥

पित्तानिलकफापहत्वम्। हृद्रोगमलाश्मविबन्धकारित्वम्। पुंस्त्वनाशित्वम्। अत्र स्थविरायाः गुणाद्रूत्वञ्च ॥ स्थूलैलागुणाः। रोचनत्वम्। तीक्ष्णत्वम्। लघुत्वम्। उष्णत्वम्। कफपित्तहृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनाशित्वञ्च। इति राजनिर्घण्टः ॥

स्थूलोच्चयः, पुं, ( स्थूलानामुच्चयो यत्र। ) गण्डोपलः। गजानां मध्यमगतिः। ( यथा, माघे। १२। १६।

"स्थूलोच्चयेनागमदन्तिकागतां
गजोऽग्रयायामग्रकरः करेणुकाम् ॥")

असाकल्यम्। वरण्डः। इति मेदिनी ॥ हस्तिदन्तरन्ध्रम्। इति शब्दमाला ॥

स्थेयः, पुं, ( तिष्ठति विवादनिर्णयार्थमस्मिन्निति। स्था + यत्। ) विवादपदस्य निर्णेता। ( यथा, राजतरङ्गिण्याम्। ६। १३।

"कार्त्तान्तिको भिषक् सभ्यो गुरुर्मन्त्री पुरोहितः।
दूतः स्थेयो लेखको वा न तदाभूदपण्डितः ॥")

पुरोहितः। इति मेदिनी ॥ स्थिरतरे, त्रि। इति हेमचन्द्रः ॥ ( क्ली, स्था + भावे यत्। स्थातव्यम्। यथा, हरिवंशे। ८५। ७।

"बलिनः सन्निकर्षे तु न स्थेयं पण्डितेन वै।
अपक्रामेद्धि कालज्ञः समर्थो युद्धमावहेत् ॥")

स्थेयान्, [स्] त्रि, ( अयमनयोरतिशयेन स्थिरः। स्थिर + ईयसुन्। "प्रियस्थिरेति।" ६। ४। १५७। इति स्थादेशः। ) स्थिरतरः। इत्यमरः। ३। १। ७३। ( यथा, महागणपतिस्तोत्रे। २५।

"श्रेयः स्थेयः स देयान्मम विमलदृशो बन्धुरं सिन्धुरास्यः ॥")

शाश्वतः। इति भरतः ॥

स्थेष्ठः, त्रि, ( अयमेषामतिशयेन स्थिरः। स्थिर + इष्ठन्। "प्रियस्थिरेति।" ६। ४। १५७। इति स्थादेशः। ) अतिस्थिरः। इति हेमचन्द्रः ॥

स्थैर्य्यं, क्ली, ( स्थिरस्य भावः। स्थिर + ष्यञ्। ) स्थिरत्वम्। गर्भस्थस्याङ्गानां स्थैर्य्यं चतुर्थे मासि भवति। इति सुखबोधः ॥ ( यथा, याज्ञवल्क्यः। ३। ८०।

"स्थैर्य्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः।
षष्ठे बलस्य वर्णस्य नखरोम्णाञ्च सम्भवः ॥" ॥

दृढ़ता। यथा, महाभारते। ३। १३। ८।

"महेन्द्रसदृशः शौर्य्ये स्थैर्य्ये च हिमवानिव।
समुद्र इव गाम्भीर्य्ये सहिष्णुत्वे धरासमः ॥")

स्थोणी, [न्] पुं, भारवाहकाष्ठः। इति भरतद्विरूपकोषः ॥

स्थौणेयं क्ली, ( स्थूणायां भवम्। स्थूणा + ढक्। ) ग्रन्थिपर्णनामकगन्धद्रव्यम्। इत्यमरः। २। ४। १२२ ॥ गेठियाला इति भाषा ॥ अथ ग्रन्थिपर्णस्यैव भेदः। स्थौणेयं गन्धि स्थौणेयं थुनेर इति लोके।

"स्थौणेयकं बर्हिवर्हं शुकवर्हञ्च कुक्कुरम्।
शीर्णं रोम शुकं चापि शुकपुष्पं शुकच्छदम् ॥

स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषनुत्।
मेधाशुक्रकरं रुच्यं रक्षोऽश्रीज्वरजन्तुजित् ॥
हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकालकान् ॥"

अथ ग्रन्थिपर्णस्यैव भेदो भटेउर इति नेपालदेशे भवति।

"निशाचरो धनहरः कितवो गणहासकः।
रोचको मधुरस्तिक्तः कटुः पाके कटुर्लघुः ॥
तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकण्डूकफानिलान्।
रक्षोऽश्रीस्वेदमेदोऽस्रज्वरगन्धविषव्रणान् ॥"

इति भावप्रकाशः ॥

स्थौणेयकं, क्ली, ( स्थौणेयमेव। स्वार्थे कन्। ) सुगन्धद्रव्यभेदः। थुनिरा इति हिन्दी भाषा। तत्पर्य्यायः। बर्हिशिखम् २ शुकच्छदम् ३ मयूरचूडम् ४ शुकपुच्छकम् ५ विकीर्णरोम ६ कीरवर्णकम् ७ विकीर्णसंज्ञम् ८ हरितम् ९। अस्य गुणाः। कफवातनाशित्वम्। सुगन्धित्वम्। कटुत्वम्। तिक्तत्वम्। पित्तप्रकोपप्रशमनत्वम्। बलपुष्टिविवर्द्धनत्वञ्च। इति राजनिर्घण्टः। भावप्रकाशोक्तगुणपर्य्यायौ पूर्व्वोक्तशब्दे द्रष्टव्यौ ॥

स्थौरी, [न्] पुं, खरत्वप्रभवत् पृष्ठेन भारवाहकोऽश्वः। तत्पर्य्यायः। पृष्ठ्यः २। इत्यमरः। २। ८। ४६ ॥ द्वे खरत्वप्रभवत् पृष्ठेन भारवाहकेऽश्वे। पृष्ठेन वहति पृष्ठस्थमपि बाह्यमुपचारात् तद्वहति वा पृष्ठ्यः ढघे कादिति यः। स्थूलाते संव्रियते पृष्ठमनया स्थूरा स्थूल तु क ड इंहयो सेमक्तान् सरीरिति अः निपातनात् तस्य रत्वं स्थूरा पर्य्ययणं तस्या इदमिति यो स्थौरं पृष्ठारोपितभारादिकं तदस्यस्तीति इति स्थौरी स्थूरी च स्थौरीति स्वामी। इति भरतः ॥

स्थौलशीर्षं, त्रि, ( स्थूलशिरस इदमिति। स्थूलशिरस् + अण्। "अचि शीर्षः।" ६। १। ६२। इति शीर्षादेशः। ) दृढमस्तकसम्बन्धि। इति काशिका ॥

स्थौल्यं, त्रि, ( स्थूलस्य भावः। स्थूल + ष्यञ्। ) स्थूलता। ( यथा, भागवते। ३। ११। ३।

"एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ॥")

स्नपनं, क्ली, ( स्ना + णिच् + ल्युट्। ) स्नानम्। यथा, दुर्गोत्सवप्रकरणे तिथ्यादितत्त्वे।

"प्रजवान् स्नपनं श्रेष्ठं संपनार्पणं स्नानम्।
सर्पणाभ्यासदानस्य मस्तिष्काजनिपातनम् ॥"

स्नपितः, त्रि, ( स्ना + णिच् + क्तः। ) कृतस्नानः। ( यथा, गीतगोविन्दे। १२। १।

"गतवति सखीवृन्दे मन्दत्रपाभरनिर्भरस्मरशरवशाकूतस्फीतस्मितस्नपिताधराम् ॥")

स्नव', पुं, ( स्नु प्रस्रवणे + "ऋदोरप्।" इत्यप्। ) प्रस्रवणम्। क्षरणम्। इत्यमरः। ३। २। ९।

स्नसा, स्त्री, स्नायुः। इति हेमचन्द्रः ॥

स्नातः, त्रि, ( स्ना + क्तः। ) कृतस्नानः। यथा,—

"स्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि।
अस्नातस्य क्रियाः सर्व्वा भवन्ति हि यतोऽफलाः।
प्रातः समाचरेत् स्नानमतो नित्यमतन्द्रितः ॥"

इति प्रायश्चित्ततत्त्वम् ॥

स्नातकः, पुं, ( स्नात एव। स्ना + "यावादिभ्यः कन्।" ५। ४। २९। इति स्वार्थे कन्। ) आप्लुतव्रती। इत्यमरः। २। ७। ४३ ॥ द्वे समाप्तवेदाध्ययने स्नानशीले स्नातं स्नानं शीलमस्य। स्नातकः विकारसंघेति कः। आप्लुतं स्नानं तत्र व्रती नित्यस्नायी। स्ना शुत्वा भावे क्तः आप्लवव्रतीति क्वचित् पाठः। ब्रह्मचर्य्यं त्यक्त्वा यो गृहाश्रमं गतः स स्नातकः। समाप्तवेदाध्ययनो यः स्नानशीलः आश्रमान्तरं न गतः सोऽपि स्नातकः। स्नातकस्त्रिविधः। व्रतचर्य्यापरणस्य यः शास्त्रबोधितोऽवधिः तावद्व्रतं समाप्यासमाप्तवेद एवाश्रमान्तरं गतो यः स व्रतस्नातकः। वेदमधीत्य गुरुसन्निधौ वेदाभ्यासं यः करोति स विद्यास्नातकः। पालितसम्यग्व्रतः प्राप्तवेदो यो द्वितीयाश्रमं गतः स उभयस्नातकः। इति टीकान्तरे। इति भरतः ॥

स्नानं, क्ली, ( स्ना + ल्युट्। ) मज्जनम्। अवगाहनम्। तत्पर्य्यायः। आप्लावः २ आप्लवः ३। इत्यमरः। २। ६। १२१ ॥ अभिषेकः ४। इति शब्दरत्नावली ॥ उपस्पर्शनम् ५ सवनम् ६ समर्नम् ७। इति जटाधरः ॥ तद्भुकस्य सप्तविधः। मान्त्रम् १ भौमम् २ आग्नेयम् ३ वायव्यम् ४ दिव्यम् ५ वारुणम् ६ मानसम् ७। एतेषां विवरणं पश्चात् स्फुटीभविष्यति ॥ * ॥ अस्य गुणाः।

"स्नानं पवित्रमायुष्यं श्रमस्वेदमलापहम्।
शरीरबलसन्धानं केशमोजस्करं परम् ॥
उष्णाम्बुनाधःकायस्य परिषेको बलावहः।
तेनैव तूत्तमाङ्गस्य बलहृत् केशचक्षुषोः ॥
विनिहन्ति शिरः स्नानं व्यथातालास्यशोषणम्।
मसोष्णपीडकाकण्डू शिरोरोगांश्च पैत्तिकान् ॥
मधुकामलकैः स्नानं पित्तघ्नं तिमिरापहम्।
स्नानं वचाघनैरिष्टं श्लेष्मघ्नं तिमिरापहम् ॥
स्नानं कृष्णतिलैश्चापि चक्षुष्यमनिलापहम्।
अस्नातस्य शरीरस्य उष्णा सर्व्वाङ्गगोचरः ॥
स्नानेनैकत्वमायाति तेन दीप्यति पावकः।
स्नानमर्हितनेत्रास्यकर्णरोगातिसारिषु ॥
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम्।
दौर्गन्ध्यं गौरवं कण्डूं कण्डूं मलमरोचकम्।
स्वेदं बीभत्सतां हन्ति शरीरपरिमार्ज्जनम् ॥"

इति राजवल्लभः ॥ * ॥

अथ स्नानविधिः। दक्षः।

"चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले ॥"

कुर्य्यादिति शेषः। तथा च।

"अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्त्वा च यो नरः।
देवादीनामृणी भूत्वा नरकं प्रतिपद्यते ॥" * ॥

विशेषः । त्वगुपकारकः । स च त्रिविधः । उष्णः । शीतः । अनुष्णाशीतः । पृथिव्याः स्पर्शः काठिन्यादिः पाकजः । जलपरमाणुस्पर्शः नित्यः । अन्यत्रानित्यः । वैशेषिकमते पार्थिवपरमाणुमात्रस्य पाकजस्पर्शः । नैयायिकमते तु द्व्यणुकादिस्पर्शोऽपि पाकजः । यथा,—

"स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ।
अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः ॥
काठिन्यादिः क्षितावेव नित्यतादि च पूर्व्ववत् ।
एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित् ॥
तत्रापि परमाणौ स्यात् पाको वैशेषिके नये ।
नैयायिकानान्तु नये द्व्यणुकादावपीष्यते ॥"

इति भाषापरिच्छेदः ॥

स्पर्श निरूपयति । स्पर्श इति । उपकारक इति स्पर्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः । अनुष्णाशीतेति । पृथिव्या वायोः स्पर्शोऽनुष्णाशीतः । जलस्य शीतः । तेजस उष्णः । काठिन्येति । कठिनसुकुमारस्पर्शः पृथिव्या एव इत्यर्थः । काठिन्यादिकन्तु न संयोगनिष्ठो जातिविशेषः चक्षुर्ग्राह्यतापत्तेः । पूर्व्ववत् जलतेजोवायुपरमाणुस्पर्शा नित्याः इत्यर्थः । तद्भिन्नाः स्पर्शास्त्वनित्या इत्यर्थः । एतेषां रूपरसगन्धस्पर्शानाम् । नान्यत्रेति । पृथिव्या हि रूपरसगन्धस्पर्शपरावृत्तिः पाकरससंयोगादुपलभ्यते । नहि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते नीरे सौरभमौष्ण्य नयव्यतिरेकाभ्यामुपाधेरेवेति निर्णीयते पवनपृथिव्योः शीतस्पर्शादिवत् पृथिवीष्वपि मध्ये परमाणावेव रूपादीनां पाकः इति वैशेषिका वदन्ति । नैयायिकानामिति नैयायिकानां मते द्व्यणुकादौ अवयविन्यपि पाको भवति । इति सिद्धान्तमुक्तावली ॥ * ॥

पुराणमते एकादशविधस्पर्शो यथा । उष्णः १ शीतः २ सुखः ३ दुःखः ४ स्निग्धः ५ विशदः ६ खरः ७ मृदुः ८ श्लक्ष्णः ९ लघुः १० गुरुः ११ । इति महाभारते मोक्षधर्म्मः ॥ कठिनः । इति तत्रैव आश्वमेधिकपर्व्व ॥ आचमनाङ्गस्पर्शनं आचमनशब्दे द्रष्टव्यम् ॥ * ॥ उच्छिष्टस्य स्पर्शनिषेधो यथा,—

"न स्पृशेत् पाणिनोच्छिष्टो विप्रगोब्राह्मणाननान् ।
न चासनं पदा वापि न देवप्रतिमां स्पृशेत् ॥"

इति कौर्म्मे उपविभागे । १६ । ३५ ॥

अथ उच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तम् । आपस्तम्बः ।

"शक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा ।
प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम् ।
गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् ।
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति ॥
भुक्तोच्छिष्टोऽप्यथ स्पृष्टः प्राजापत्यं समाचरेत् ।
अर्द्धोच्छिष्टे स्मृतः पादः पादं चाचान्त एव च तथा ॥"

प्राजापत्यं तु पाने । अर्द्धोच्छिष्टो येन आर्द्रग्रासः आस्ये निःक्षिप्तः न तु निगीर्णः । दक्षः ।

"पाने मैथुनसंसर्गे तथा मूत्रपुरीषयोः ।
स्पर्शनं यदि गच्छेत्तु शवोदक्यान्त्यजैः सह ॥
दिनमेकं चरेन्मूत्रे पुरीषे तु दिनद्वयम् ।
दिनत्रयं मैथुने स्यात् पाने स्याच्च चतुष्टयम् ॥"

काश्यपः ।

"श्वसूकरान्त्यचाण्डालमद्यभाण्डरजस्वलाः ।
यद्युच्छिष्टः स्पृशेत् तत्र कृच्छ्रं सान्तपनं चरेत् ॥"

एतज्ज्ञानाभ्यासे । सान्तपने धेनुद्वयम् । ब्रह्मपुराणे ।

"उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः ।
उपवासेन शुद्धिः स्यात् शुना संस्पृष्ट एव वा ॥
उच्छिष्टेन तु विप्रेण विप्रः स्पृष्टस्तु तादृशः ।
उभौ स्नानं प्रकुर्व्वतः सद्य एव समाहितौ ॥"

अनुच्छिष्टस्नानसस्य नक्तमिति प्रायश्चित्तविवेकः ॥ * ॥ अथ रजस्वलास्पर्शप्रायश्चित्तम् । काश्यपः ।

"रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी तु या ।
त्रिरात्रेण विशुद्धिः स्यात् व्यासस्य वचनं यथा ॥
रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी च या ।
पञ्चरात्रनिराहारा पञ्चगव्येन शुध्यति ॥
रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी यदि ।
षड्रात्रेण विशुध्येत्तु ब्राह्मणी कामचारतः ॥
अकामतश्चरेदर्द्धं ब्राह्मणी सर्व्ववर्णतः ॥"

एतेन रजस्वलाया ब्राह्मण्याः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः पञ्चगव्यपानं कामतः । अकामतस्तदर्द्धं नक्तव्रतम् । असवर्णरजस्वलास्पर्शे त्रिरात्रपञ्चरात्रषड्रात्रोपवासाः । अकामतस्तदर्द्धं एतच्चतुर्थाहानन्तरं कर्त्तव्यम् ।

"चाण्डालेन श्वपाकेन संस्पृष्टा चेद्रजस्वला ।
अतिक्रम्य तान्यहानि प्रायश्चित्तं समाचरेत् ॥
त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुध्यति ।
तां निग्रहान्तु अतिक्रम्य स्नानान्तुक्तन्तु कारयेत् ॥"

इति वचनान्तरदर्शनात् ॥

एतत् कामतः । अत्र दिनभेदोऽपि नास्ति । अज्ञाने इच्छयाति: ।

"पतितान्त्यश्वपाकैस्तु संस्पृष्टा स्त्री रजस्वला ।
तान्यहानि अतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमाचरेत् ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत् ॥"

चतुर्थेऽह्नीति शुद्धिस्नानात् पूर्व्वम् । यमः ।

"रजस्वला यदा स्पृष्टा श्वजम्बुकखरैः क्वचित् ।
निराहारा भवेत्तावत् यावत् स्नानेन शुध्यति ॥"

अत्रापि इच्छायातुदिनभेदव्यवस्था । वृद्धशातातपः ।

"रजस्यास्तु ये नार्य्यावन्योन्यं स्पृशतो यदि ।
सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्च्चमतः परम् ॥"

पञ्चगव्यपानं शक्तरूपं तेनोपवासः । ब्रह्मकूर्च्चमाह जावालः ।

"अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिबेत् प्रातः ब्रह्मकूर्च्चविधिः स्मृतः ॥"

तदशक्तौ पुराणैकं दातव्यम् । उच्छिष्टशूद्रादिस्पर्शे इच्छयाति: ।

"शुना चोच्छिष्टया शूद्रा संस्पृष्टा द्व्यहमाचरेत् ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥"

परतश्चतुर्थदिने स्नानात् पूर्व्वमिति ज्ञेयम् । इति प्रायश्चित्ततत्त्वम् ॥ मत्स्यसूक्तोक्तास्पृश्यस्पर्शनप्रायश्चित्तं स्नानशब्दे द्रष्टव्यम् ॥ (त्रि, स्पर्शकः । आनन्दजनकः । यथा, भागवते । ३ । २१ । ८ ।

"श्वेतोत्पलक्रीड़नकं मनःस्पर्शस्मितेक्षणम् ॥")

स्पर्शकः, त्रि, (स्पृशतीति । स्पृश + ण्वुल् ।) स्पर्शनकर्त्ता । स्पृशधातोः कर्त्तरि ण्वकप्रत्ययेन निष्पन्नः ॥

स्पर्शनं, क्ली, (स्पृश + ल्युट् ।) दानम् । स्पर्शः । इति मेदिनी ॥ (यथा, भागवते । १ । १० । १४ ।

"तस्मिन्नन्तधियः पार्थाः सहेरन् विरहं कथम् ।
दर्शनस्पर्शनालापशयनासनभोजनैः ॥"

सम्बन्धः । इति मल्लिनाथः ॥ यथा, रघुवंशे । २ । ५० ।

"तदद्य कल्याणपरम्पराणां
भोक्तारमूर्ज्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्न-
मृद्धं हि रा[ज्यं] पदमैन्द्रमाहुः ॥")

स्पर्शनः, पुं, (स्पृशतीति । स्पृश + ल्युः ।) वायुः । इत्यमरः । १ । १ । ६४ ॥

स्पर्शमणिः, पुं, (स्पर्शप्रधानो मणिः । स्पर्शेन स्वर्णोत्पादकत्वात् तथात्वम् ।) स्पर्शमात्रेण स्वर्णजनकप्रस्तरविशेषः । परशमाथर इति भाषा । इति वक्ष्यमाणशब्ददर्शनात् ॥

स्पर्शमणिप्रभवं, क्ली, (स्पर्शमणिः प्रभवो यस्य ।) स्वर्णम् । इति शब्दरत्नावली ॥

स्पर्शलज्जा, स्त्री, (स्पर्शात् लज्जा संकोचनरूपा यस्याः ।) लज्जालुवृक्षः । इति शब्दचन्द्रिका ॥

स्पर्शगुहा, स्त्री, (स्पर्शे गुहा ।) शतमूली । इति शब्दचन्द्रिका ॥

स्पर्शस्यन्दः, पुं, (स्पर्शेन स्यन्दते स्रवयतीति । स्यन्द + अच् ।) भेकः । इति केचित् ॥

स्पर्शा, स्त्री, (स्पृशति परपुरुषमिति । स्पृश + अच् । टाप् ।) कुलटा । इति धरणिः ॥

स्पर्शानन्दा, स्त्री (स्पर्शेन आनन्दो यस्याम् ।) अप्सराः । इति त्रिकाण्डशेषः ॥

स्पष्टा, [ ष्ट ] त्रि, (स्पृशतीति । स्पृश + तृच् ।) उपतापकमात्रम् । रोगः । इति वैद्यके । इत्यमरटीकायां भरतः । ३ । २ । २४ ॥

स्पश, श ग्रन्थबाधयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-सेट् ।) श, स्पशति स्पशते । पस्पाश । अन्यस्थाने स्पर्शं पठन्ति केचित् । इति दुर्गादासः ॥

